


राष्ट्रिय संस्कृत संस्थानम्
नवदेहली

गङ्गानाथ झा केन्द्रीय संस्कृत विद्यापीठ ग्रन्थमाला
॥ २७ ॥


कुमारिलस्वामिप्रणीतम्

# ॥ लघुवार्त्तिकम् ॥


सम्पादकः
डॉ० कमलनयन शर्मा




Rashtriya Sanskrit Sansthan
*( Under the auspices of the Ministry of Human Resources Development, Govt. of India )*
**New Delhi**



**Ganganatha Jha Kendriya Sanskrit Vidyapitha TEXT SERIES**



*General Editor*
**Dr. G. C. Tripathi**



# No. 27
# LAGHUVĀRTIKAM

*ascribed to*
**Kumārila Bhaṭṭa**

*edited by*
Dr. Kamal Nayan Sharma




ALLAHABAD
1987

राष्ट्रियसंस्कृतसंस्थानम्
( केन्द्रीयमानवसंसाधनविकासमन्त्रालयस्याङ्गभूतम् )
नवदेहली

—•—

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठग्रन्थमाला
प्रधानसम्पादकः
डॉ० गयाचरण त्रिपाठी

—•—

सप्तविंशं प्रसूनम्

# लघुवार्त्तिकम्

कुमारिलस्वामिप्रणीतम्

—•—

सम्पादकः
डॉ० कमलनयन शर्मा

—•—

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्
चन्द्रशेखर आज़ाद पार्क
प्रयागः-२११००२
१९८७

कुमारिलभट्टप्रणीतम्

# लघुवार्त्तिकम्

•

सम्पादकः

डॉ० कमलनयन शर्मा




गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्

चन्द्रशेखर आज़ाद पार्क

प्रयाग-२११००२

१९८७

प्रकाशकः
डॉ० गयाचरण त्रिपाठी
प्राचार्यः
गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्
चन्द्रशेखर आज़ाद पार्क
प्रयाग-२

●



●

मूल्यम्

978-93-86135-37-0

●

मुद्रकः
शाकुन्तल मुद्रणालयः
३४, बलरामपुर हाउस
प्रयाग-२

## FOREWORD

We have a sense of great satisfaction in presenting the critically edited text of *Laghuvārtikam* to the scholars of Mīmāṃsā Philosophy. This is one of those rare works, the Mss. of which are not so frequently avaiable in the Indian Libraries. This edition has been prepared mainly on the basis of manuscripts preserved in this Institute as well as in Saraswati Bhawan, Varanasi. The text of *Laghuvārtikam* presents the philosophy of Mīmāṃsā in a highly condensed and succinct manner. It generally follows the scheme of the Sūtras of Jaimini and the Bhāṣya of Śabara Svāmī and divides its sections so as to correspond exactly with the contents of the Sūtras and the Bhāṣya. It is really amazing that the author of this hitherto unknown work has been able to delineate the whole of Mīmāṃsā Philosophy in just about 385 Anuṣṭubh verses in such a simple and lucid way.

The present work is traditionally ascribed to the famous Kumārila Bhaṭṭa, perhaps the greatest of the Mīmāṃsakas that India has produced and a philosopher of high eminence. Dr. Kamal Nayan Sharma, the editor of this work, firmly believes that *Laghuvārtikam* has really come out of the pen of the great Kumārila. A critical and thorough study of the text will enable the scholars to determine whether the work can really be assigned to Kumārila.

The text has been commented upon by one Uttamaśloka Tirtha of Varanasi in the 18th century. We have unfortunately not been able to procure all the Mss. of the Ṭikā lying at present in the different libraries of India.

Hence it has remained incomplete. May be, a later scholar completes this work by procuring the relevant Mss. from the Saraswati Bhavan and the Saraswati Mahal Libraries of Varanasi and Thanjaur respectively.

The task of editing has been efficiently carried out by Dr. Kamal Nayan Sharma who was previously a Lecturer in this Vidyapeetha but has since joined the Puri Vidyapeetha as Reader in Dharmaśāstra. He has also added a scholarly introduction in Sanskrit to this text. I thank him sincerely for doing his job excellently and am also grateful to Pandit Gajanana Shastri Musalgaokar who has rivised the Ms. before it was sent to Press.

The School of Mīmāmsā represents the oldest philosophical system of India. However not many works of this school have come down to us. The study of Mīmāmsā is also not persued so vigorously these days. I hope that the publication of this text will give a small impetus and encouragement to the studies of this important Śāstra.

G. N. Jha Kendriya Skt. Vidyapeetha
Allahabad
15th Novemer, 1987

**G.C. Tripathi**
*Principal*

# प्रस्तावना

अयि मीमांसाविद्यावदातसहृदया विद्वांसः ! समुपह्रियतेतमां तत्रभवतां भवतां समक्षम्, स्कन्दावतारभट्टपादकुमारिलविरचितं विद्वत्तल्लजगोष्ठीषु बहुकालादेव सबहुमानं परिचर्चितमिदं 'लघुवार्त्तिकम्' नाम ग्रन्थरत्नम्। अयञ्च ग्रन्थः मीमांसा-शास्त्रीयशृङ्खलाया अत्यावश्यकावयवभूतः चिरकालाद् विनष्ट इवासीदिति, विद्वत्सु चर्चा आसीदस्य ग्रन्थरत्नस्य, परन्तु न केनापि दृष्टः प्रकाशितग्रन्थरूपेण। परम-सौभाग्यस्यायं विषयः मीमांसककुलाय यदिदं ग्रन्थरत्नं प्रकाश्यते विज्ञैः विद्यापीठीयै-रधिकारिभिः।

ननु च भोः केयं मीमांसा या पुनः पुनः चर्च्यते। श्रूयताम्—षट्सु भारतीय-दर्शनेषु शिरोमणिभूतमिदं मीमांसादर्शनमिति। पूजार्थकमान्धातोः 'मानेर्जिज्ञा-सायाम्' इति कात्यायनीयेन वार्त्तिकेन जिज्ञासारूपेऽर्थे सन्प्रत्यये कृते मीमांसाशब्दः निष्पद्यते। प्रकृत्यर्थः पूजा प्रत्ययार्थश्च जिज्ञासा भवति।

ज्ञातुमिच्छा जिज्ञासा। स्वोपज्ञे भाष्ये भाषितञ्च भगवता शबरस्वामिना—'सा हि ज्ञातुमिच्छा' इति। अत एव च षड्दर्शनकाननपञ्चाननश्रीवाचस्पतिमिश्रेणापि शाङ्करभाष्यटीकायामभिहितम् 'पूजितविचारवचनः मीमांसाशब्दः' इति। पूजितत्वञ्च 'परमपुरुषार्थहेतुभूतसूक्ष्मतमार्थनिर्णयफलकत्वम्' इति व्युत्पत्त्या च पूजिता जिज्ञासा इत्येवार्थः प्रतीयते। तथापि जिज्ञासापदस्य विचारे लाक्षणिकत्वात् पूजितः विचार इत्यभिहितं मिश्रपादैरिति न काचित् क्षतिः। लक्षणा च तात्पर्यानुपपत्त्यैवात्र भवति। लक्षणाफलञ्च निर्णयात्मकस्यार्थस्य बोध एव। स चाधिकरणगम्यः। न्यायवैशेषिक-साङ्ख्ययोगमीमांसावेदान्तपदवाच्येषु षट्सु भारतीयदर्शनेषु मुकुटमणिरिवेदं चकास्ति। दर्शनेषु सर्वेषु अथ च सर्वेषु विषयेषु वाक्यार्थनिर्णयाय अस्यैवावश्यकता वरीवर्त्ति। अत एव वाक्यार्थस्य निर्णयप्रसङ्गे सबहुमानं स्मरन्तीदं दर्शनं विद्वत्प्रकाण्डाः। अस्मादेव कारणादस्य महत्त्वं प्रख्यापितं भवति। अस्य च दर्शनस्य परम्परा अतीव प्रत्ना दरी-दृश्यते। नेयं केवलं जैमिनितः प्रभवति।

प्रतिपादितञ्च श्रीमद्यज्ञात्मसूनुना श्रीमता पार्थसारथिमिश्रेण जिज्ञासाधिकरणे चतुर्विंशतितमे श्लोकव्याख्याने न्यायरत्नाकरे। तथा हि—"ब्रह्मा प्रजापतये मीमांसां प्रोवाच, सोऽपीन्द्राय, स आदित्याय, स च वसिष्ठाय, सोऽपि पराशराय, पराशरः कृष्णद्वैपायनाय, सोऽपि जैमिनये। स च स्वोपदेशान्तरमिमं न्यायं ग्रन्थे निबद्धवान्"। एषा अनादिपरम्परा वर्त्तते मीमांसादर्शनस्य।

एवमप्यत्र शक्यते वक्तुम्, भारतीयवैदिकपरम्परायां विशेषतश्च मीमांसाविद्याविद्योतितान्तःकरणानां प्रेक्षावतां परम्परायां वेदानामपौरुषेयत्वम्, तस्माच्चानादित्वमिति जानन्त्येव विद्वदग्रेसराः । वेदेषु च तत्तत्स्थलेषु मीमांसाशब्दः प्रयुक्तो दृश्यते ।

तथा हि— 'अभिधार्या नाभिधार्या इति मीमांसन्ते,' 'सैषा आनन्दस्य मीमांसा भवति', 'देवेष्वथ नु मीमांस्यमेव ते', 'महाश्रोत्रियाः समेत्य मीमांसाञ्चक्रुः' इत्यादि अस्माच्चेदं प्रतीयते यद् यत्र यत्र काले वेदानां स्थितिरासीत् तत्र तत्र काले मीमांसाया अपि स्थितिरासीदेव । भारतीयविचारसन्तानवितानानुसारं नैतादृशः कश्चित्कालोऽस्ति यत्र काले वेदानामभावः परिकल्पयितुं शक्यते । समेषां दार्शनिकानां सिद्धान्ते ब्रह्मणः नित्यत्वमेव, नानित्यत्वमिति । वेदाश्च ब्रह्मणः श्वासप्रश्वासरूपा इति वर्णयन्ति -'यस्य निःश्वसितं वेदाः' इत्यादिना । ततोऽपि नित्यत्वमेव सिद्ध्यति । अन्यथा अनित्यत्वपक्षेऽभावकाले श्वासप्रश्वासरूपाणां वेदानामभावात् तस्य ब्रह्मणोऽपि शरीरं पूतिगन्धि स्यात्, शवरूपत्वात् । तस्माद् वेदानां तन्मूलकस्य च मीमांसा दर्शनस्यानादित्वं प्रतिपादयितुं शक्यते । महाप्रलयवादिनां मते तेषां वेदानां परब्रह्मणि एव तिरोधानं भवति सृष्टेः प्रारम्भे च पुनराविर्भवति । अत एवोक्तम्— 'यो ब्रह्माणं विदधाति, वेदांश्च प्रहिणोति तस्मै' इत्यादि । मीमांसायाः ब्रह्मणः यादृशी परम्परा भवति, सा पूर्वमेवोक्ता ।

खण्डप्रलयवादिनां मतेऽस्य संसारस्य धारावाहिकनित्यता स्वीक्रियते । ते चोदाहरन्ति 'धाता यथापूर्वमकल्पयत्', न कदाचिदनीदृशं जगत्' इत्यादि । अत एतेषां मतेऽनित्यत्वगन्धलेशोऽपि नास्ति । भवतु नाम महाप्रलयः खण्डप्रलयो वा परन्तु वेदानां नित्यत्वमनादित्वमपौरुषेयत्वञ्च स्वीक्रियमाणे नास्ति काचित् क्षतिरित्यास्माकीना पुरातनी परम्परा । अहिर्बुध्न्यसंहितायाञ्च सर्वासां विद्यानां प्रादुर्भावस्थानं तिरोधानस्थानञ्च परब्रह्म एवेति सुस्पष्टं प्रतिपादितं वर्त्तते । अत एवास्माकं भारतीयसिद्धान्ते ब्रह्मपर्यन्तमनुधावनमावश्यकं भवति । यानि च भौतिकदर्शनानि सन्ति, तेषां न कुत्रापि विश्रान्तिरिति स्पष्टमेव पश्यन्तु भवन्तः । अलमनेन वितर्केण ।

महर्षिः जैमिनिः कदा कं वा देशमलञ्चकारेति जिज्ञासा सञ्जायते । महर्षीणामेतेषां देशविषये निश्चप्रचं किमपि वक्तुं न शक्यते । महर्षयः नैकस्मिन्नेव देशे सर्वदा निवसन्तिस्म, भ्रमणशीलत्वात्तेषाम् । अत एवैकस्यैव महर्षेः नाम्ना अनेकानि स्थानानि व्यपदिष्टानि भवन्ति । कालविषये च विचारणाय परम्पराद्वयमवलोक्यते । एका चास्मत् प्राचीना परम्परा यत्र नक्षत्रादिकं दृष्ट्वैव कालः निर्णीयते । सृष्टेश्चारम्भादेव कालगणना क्रियते । सत्यादिचतुर्युगानां परिमाणमवलम्ब्य प्रचलति विचारः । एतया च परम्परया विचार्यमाणे जैमिनेः कालः अतीव सुदीर्घं प्रतिभाति । द्वापरे महाभारतमभूदिति सर्वे जानन्त्येव भारतीयाः । तस्मिन्नेव काले व्यासस्य स्थितिरिति

स्वीक्रियते । तेषामेव शिष्यत्वेन स्मरन्ति जैमिनिम् । अतः जैमिनेरपि कालः स एव अर्थात् ५०८८ वर्ष पूर्वं स्वीकर्त्तुं शक्यते । नात्र काचिदनुपपत्तिरिति ।

अपरा च परम्परा आङ्ग्लदेशीयानां समस्ति । तदनुयायिनश्च भारतीया अपि तत्र श्रद्धधते । तेषु स्वधर्मं प्रति स्वधर्मप्रवर्त्तकं प्रति चातीव श्रद्धा दरीदृश्यते । स्वधर्मं प्रचारयितुं सदा जागरूकाः भवन्ति । व्यवसायेऽध्यवसाये च नीतिनिपुणाः भवन्ति । अतएवैकदा तेषां राज्यं सम्पूर्णे विश्वे आसीदिति ऐतिह्य विदो वदन्ति । पवित्रतमोऽयं भारतदेशोऽपि तैराक्रान्त आसीदेव । तस्मादेव कालादारभ्य अद्य यावत् अस्मिन्नपि देशे कालगणना आङ्ग्लदेशीयप्रदत्तया प्रणाल्या एव प्रचलति । तेषां मते ईशुः खलु मानदण्ड इव विराजते । यथा पृथिव्याः मानदण्डत्वेन गिरिराजः हिमालयः प्रतिपादितो भवति, तथैव कालगणनाविषये 'मसीह' एवैको मानदण्डः । तमधिकृत्यैव तस्मात्पूर्वं पश्चाद्वा कालव्यवस्था क्रियते एतदनुसारं ईसातः पूर्वं शतद्वयवर्षं जैमिनेः कालं निश्चिन्वन्ति । अर्थात् सम्प्रति जैमिनेः कालः २१८७ वर्षं यावत् भवतीति । अयमेव मीमांसासूत्रकाल इति व्यवह्रियते । जैमिनिप्रणीतानि सूत्राणि मीमांसासूत्राणि जैमिनिसूत्राणि वेति नाम्ना ज्ञायन्ते । सूचनात् सूत्रमित्युच्यते । तत्र प्रतिपाद्यानां विषयाणां सूक्ष्मरूपेण सङ्केतरूपेण वा प्रतिपादनं भवति । अत एवोक्तम् —

अल्पाक्षरमसन्दिग्धं सारवद्विश्वतो मुखम् ।
अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः ।।

अल्पाक्षरत्वान्न समेषां बोधगम्यं भवति । ये तु सम्प्रदायविदः भवन्ति, तेभ्यः सौलभ्यं स्यान्नाम । अतः कारुणिक आचार्यः सर्वजनसंवेद्यतासम्पादनाय वृत्तिग्रन्थं रचयामास । अनेके तावद् वृत्तिग्रन्थाः विराजमानाः आसन् सन्ति च । तथापि वृत्तिग्रन्थोऽप्यतिसंक्षिप्तत्वान्न सर्वजनहिताय समभवत् । ततः मीमांसायाः प्रचाराय प्रसाराय संरक्षणाय च श्रीमता शबरस्वामिना सूत्राण्यधिकृत्य भाष्यं भाषितम् । इमे च भाष्यकारपादा सर्वशास्त्रनिष्णाता आसन्निति भाष्यग्रन्थावलोकनेन स्पष्टमेव प्रतीयते । न्यायवैशेषिकसाङ्ख्यायोगादिदर्शनानां चतुर्भेदभिन्नानां बौद्धदर्शनानामपि च यादृशं समालोचनं समुपस्थापितम्, न तथान्यत्र समवलोक्यते । एतेषामपरञ्च नाम आदित्यसेन आसीदिति ऐतिह्यविदः प्रमाणयन्ति । तदा बौद्धानां प्राबल्यात् ते भयभीताः सन्तः वनेषु शबरवेषेण निवासमकल्पयन् । मीमांसायाः जीवातुसंरक्षणतत्परा इमेऽनेकविधं कष्टं सहमाना अप्यरण्येषु विचरन्तः भाष्यं निर्माயास्य दर्शनस्य पुनरुज्जीवने साफल्यं प्राप्तवन्तः । यतः शबरवृत्या जीवनमतिवाहयन्ति स्म अतः शबरनाम्ना प्रसिद्धिंगताः । एतेषाञ्च ईसातः पश्चात् शतद्वयवर्षं यावत् काल इति स्वीकुर्वन्ति । विद्वद्धौरेयाणामेषां देशविषये विवदन्ते मनीषिणः ।

केचिद् मिथिलादेशोद्भवं मन्यन्ते, केचिच्च दक्षिणदेशोद्भवमिति। विषयेऽत्र यानि प्रमाणानि प्रदीयन्ते, तानि नैव कञ्चिदपि पक्षं समर्थयितुमीशते। सेनोपाधिः बङ्गदेशीयेषु प्राचुर्येण मिलत्यद्यापि। तस्मादिदमपि निश्चेतुं शक्यते, यदिमे बङ्गदेशीयाः विद्वांसः स्युरिति। परन्तु नैकेन प्रमाणेन कस्यचिदपि वस्तुनः तात्त्विकं विवेचनं स्थिरीकर्तुं शक्यते। तस्मादस्मिन् विषये निश्चप्रचं किमपि वक्तुं नैव पारयामः। यत्किमप्यस्त्वस्मिन् विषये, परन्तु भाष्यन्तु प्रसन्नपदगभीरं प्राञ्जलभाषया भाषितमद्यापि राजते। अस्तु,

भाष्यदस्मात् प्रभवति प्रवाहत्रयम्। प्रथमः भाट्टप्रवाहः, द्वितीयः प्राभाकरोऽथवा गुरुप्रवाहः। तृतीयश्चोभयभिन्नः मुरारिमिश्रप्रवाह इति गणनायां भट्टपादानां प्राथम्येऽपि विचारप्रसङ्गे सूचीकटाहन्यायेन श्रीमन्तं मुरारिमिश्रमधिकृत्य किमपि वक्तुकामा वयम्। तेनैव च क्रमेण विचारः प्रवर्त्तिष्यतेऽग्रेऽपि।

मीमांसादर्शने श्रीमन्तः मुरारिमिश्राः लब्धप्रतिष्ठाः सन्तीति न तिरोहितं केषामपि मनीषिणाम्। भाष्योपरि काचिद् व्याख्या आसीदेतेषामिति 'त्रिपादनीतिनयन' ग्रन्थादनुमीयते। न समग्रा टीका अद्यावधि दृष्टिपथमायाता। अयञ्च ग्रन्थः सम्प्रति समुपलब्धः। अपरश्च 'अङ्गत्वनिरुक्ति'नामा ग्रन्थः बिलसति विदुषां पुरस्तात्, ग्रन्थस्यास्य नाम्नैव विषयः प्रस्फुटति, अङ्गान्यत्र विवेचितानि स्युरिति। एतद्ग्रन्थकर्तृविषये मतवैभिन्न्यमप्यस्ति। ग्रन्थसम्पत्तिरल्पीयसी वर्त्तते, तथाप्येतेषां सिद्धान्तानां भिन्नत्वात् स्वतन्त्रत्वाच्च दर्शनजगति प्रतिष्ठा वर्वर्त्ति। अतएवाभाणकः 'मुरारेस्तृतीयः पन्थाः' इति। अत्र मूलं किमिति चेदुच्यते—भाट्टमते ज्ञानमनुमेयं भवति। अयं घट इत्यत्र घटप्रत्यक्षानन्तरं घटे ज्ञातता नामकः कश्चिद् धर्मः जन्यते ततश्च ज्ञाततालिङ्गकमनुमानमुत्पद्यते अयं घटः ज्ञातः, ज्ञाततावत्त्वात्। तल्लिङ्गकानुमानेन च 'घटविषयकज्ञानवानहम्' इति ज्ञानं भवति अर्थात् भाट्टमते ज्ञानमनुमेयमिति। प्राभाकराणां मते ज्ञानं प्रत्यक्षं भवति मुरारिमते चोभाभ्यां भिन्न एव मार्गः। अयं घट इत्यत्र घटादिज्ञानोत्तरं 'घट जानामि' इत्याद्यनुव्यवसायो जायते, तेन घटत्ववद्विशेष्यकत्वे सति घटत्वप्रकारकरूपप्रामाण्यग्रह इति। एतादृशभिन्नमतप्रतिपादनमेवाभाणकमूलमिति मन्ये। यथा मीमांसायां स्वतन्त्रस्वसिद्धान्तानां प्रणेतार आसन् तथैवान्यत्राप्येतेषां मुरारिमतं स्वतन्त्रमेव। प्रतीयतेऽनेन यदेते स्वतन्त्रविचारकाः सर्वत्र स्फीतशेमुषीका आसन्। स्वतन्त्रप्रज्ञत्वादेव भिन्नप्रस्थानस्य प्रतिष्ठापकत्वेन स्मर्यन्ते। एतेषामाविर्भावस्थानं विद्वन्मण्डलमण्डिता मिथिला कालश्च खृष्टीयपञ्चदशशतकः वर्त्तते।

अपरश्च सम्प्रदायः प्रभाकरगुरोः। गुरुमतं प्रवाहितमनेन भाट्टमतमतिरिच्य स्वसिद्धान्तप्रतिपादनेनास्य भिन्नं प्रस्थानमिति स्वाभाविकमेव। यथा भाट्टमते ज्ञानमनुमेयं भवति ज्ञाततालिङ्गकानुमानेनैव ज्ञानं जायते इत्युक्तमेव। तथा प्राभाकरमते

ज्ञानानां प्रत्यक्षत्वमेव । भाट्टमते यथार्थायथार्थभेदेन ज्ञानं द्विविधम् । प्रभाकरमते सर्वेषां ज्ञानानां याथार्थ्यमेवेत्यादि मतवैभिन्न्यं दृश्यते । अनवसरत्वादत्र मतभेदपट्टिका नैव योज्यते । श्रीशालिकनाथेनायं सम्प्रदायः समुपबृंहितः पुष्पितः फलितश्चाद्यावधि सुरक्षितश्च वर्त्तते । प्रभाकरेण शबरस्वामिविरचितं भाष्यमाधारीकृत्य द्वे व्याख्ये लिखिते । प्रथमा बृहती (निबन्धनं) द्वितीया च लघ्वी (विवरणम्) इति । बृहतीमधिकृत्य पञ्चिका नाम्नी व्याख्या प्रवर्त्तिता शालिकाचार्येण । सा अद्यापि विद्वज्जनमाह्लादयन्ती तिष्ठति । लघ्वी च नाद्यावधि दृष्टा । सम्प्रदायतः केवलं श्रुता एव । प्रभाकरस्य गुरुरित्यपरनामधेये किम्मूलमिति निश्चितं किमपि न जानीमः । एका आख्यायिका सर्वसुधीजनप्रसिद्धा वर्त्तते । तया ज्ञायतेऽयं भट्टपादस्यैव शिष्य इति । पूज्यपादस्य गुरोः विस्मयजनकस्य 'अत्रापिनोक्तम्', 'तत्र तुनोक्तम्' इति वाक्यस्य पदच्छेदद्वारा अर्थनिर्धारणसमर्थत्वात् गुरुभिरुक्तं 'त्वमेव गुरुरसि' इति । तस्मादेव दिनादयं गुरुत्वेन ख्यातिं लब्धवान् । परन्त्वत्र कियत् प्रामाण्यमस्तीति वक्तुं न शक्यते । परम्परा प्राप्ताया आख्यायिकायाः तर्कप्रमाणे अविचार्यैव त्यागोऽपि न शक्यक्रियः ।

यत्तु अयं महाभागस्तत्र तत्र मतान्तरं प्रदर्श्य शाबरभाष्यं व्याख्यातवान् । व्याख्यानमिदं 'बृहट्टीकेति' आख्यामभजत इति वदन्ति । तन्न, सम्प्रदायविरुद्धत्वात् । बृहट्टीकेति नाम्ना कुत्राप्यस्याः बृहत्याः व्यवहाराभावात्, बृहट्टीकानाम्नोदाहृतानां श्लोकानामत्रानुपलम्भात्, अस्याः बृहत्याः गद्यमयीत्वाच्च । न केनापि मीमांसकेनेयं बृहट्टीकेति नाम्ना व्यवहृता । तस्मान्नायं सिद्धान्तः मीमांसककुलपरम्परापरिशुद्ध इति । तस्मान्नापेक्ष्यः अपि तु उपेक्ष्य एवेति मन्ये । टीकेयं बृहती नाम्ना प्रसिद्धा, प्रभाकरश्च टीकाकाररूपेण । बृहट्टीकेति न प्रसिद्धिः ।

अन्यतमश्च प्रवाहः भट्टपादकुमारिलोपज्ञः । अयमेव च भट्टसम्प्रदायः, भाट्टसम्प्रदायः, भाट्टमतम्, भट्टमतम् तौतातितमतम्, कुमारिलमतम्, आचार्यमतमित्याद्यनेकामाख्यां भजते । भट्टाचार्यशब्देनाप्यस्य व्यवहारः दृश्यते । मीमांसासम्प्रदाये वार्त्तिककाररूपेण ख्यातिं प्राप्तवन्तस्ते । एतैः प्रवर्त्तिताः ग्रन्थाः उक्तानुक्तदुरुक्तचिन्ताप्रयोजकत्वात् वार्त्तिकपदव्यपदेश्याः भवन्ति । एते आचार्याः मीमांसाकर्मणि मालायाः मध्यमणिरूपेण विराजन्ते । स्वग्रन्थे परपक्षाणां यादृशं समालोचनमकारि न तादृशमन्येन केनापि समालोचितमन्यत्र । विशेषतश्च योगाचारमाध्यमिकवैभाषिकसौत्रान्तिकभेदभिन्नानां बौद्धानाञ्च मतान्यपाकृतानि सप्रमाणमिति एतद्वार्त्तिकवैशिष्ट्यं दृष्ट्वैव स्वरचितब्रह्मसूत्रभाष्यमधिकृत्य वार्त्तिकग्रन्थनिर्माणाय भगवत्पादेन श्रीमता शंकराचार्येणाप्यभ्यर्थितम् । एतस्मादस्य महद्वैदुष्यं प्रमाणितं भवति । वार्त्तिकग्रन्थमारचय्य मीमांसादर्शनमामूलचूलं सुदृढीकृतम् । तस्यैव च फलमिदं यदद्यापि मीमांसा जीवति स्वस्था च तिष्ठति । अनेन च मीमांसाभाष्यमधिकृत्य बृहट्टीका मध्यटीका चेति टीके द्वे टीकिते । टीके ते नैव समग्रे क्वापि दृश्येते, परन्तु मीमांसासम्प्रदाये प्रसिद्धे । बृहट्टीकायास्तु उद्धरणानि

ग्रन्थान्तरे समुपलभ्यन्ते तस्मादस्याः स्थितिः पूर्वमासीदित्यनुमीयते । मध्यमटीका च नाम्नैव प्रसिद्धा । एवं तन्त्रटीका तन्त्रवार्तिकं वा अस्यैव कृतिः । इयञ्च पूर्वोक्ताया एव टीकाया साररूपा समस्ति । इदञ्च तन्त्रटीकापरपर्यायं तन्त्रवार्त्तिकं भागत्रय-विभक्तं समुल्लसति । प्रथमः श्लोकैरनुबद्धत्वात् श्लोकवार्त्तिकनाम्ना ख्यातः विद्वत्-समाजे । तर्कपादीयस्य अर्थात् प्रथमाध्यायस्य प्रथमपादमात्रस्येयं व्याख्यारूपा । तदनन्तरं प्रथमाध्यायस्य द्वितीयपादमारभ्य आतृतीयाध्यायान्तं गद्यपद्यमयीव्याख्या तन्त्रवार्त्तिकशब्दाभिलप्या भवति । ततश्चतुर्थाध्यायमारभ्य द्वादशाध्यायपर्यन्तमति-संक्षिप्ता टिप्पणीरूपा वर्त्तते । टीकेयं न प्रतिपदं भाष्यमभिव्याप्नोति, अपि तु आवश्यकतानुसारं यत्किञ्चिद्भाष्यमनुसृत्यैव टीकिता वर्त्तते । अत एव टुप्टीकेति कथ्यते । सम्पूर्णमिदं तन्त्रवार्त्तिकमेवेत्यत्र श्लोकवार्त्तिकान्ते "इति श्रीकुमारिलस्वामि-विरचिते तन्त्रवार्त्तिके प्रथमाध्यायस्य प्रथमश्चरणः समाप्तः" इति ग्रन्थपुष्पिकैव प्रमाणभूता । बृहट्टीकायाः संक्षेपरूपत्वादपि तन्त्र शब्देन व्यवहृतमिति वक्तुं शक्यते । तन्त्रशब्दस्यात्रसंक्षिप्तार्थवाचकत्वात् । अपरा च कृतिरिदमेव लघुवार्त्तिकं नाम, यद् भवतां समक्षं समुपस्थाप्यते । इदं च वार्त्तिकं द्वादशाध्यायीं मीमांसामभिव्याप्नोति । अनुष्टुप् छन्दोमयमिदं वार्त्तिकम् । इदं संक्षेपेण सर्वान् विषयान् प्रतिपादयति । ते विषया अग्रे वक्ष्यन्ते ।

सरस्वतीमहललायब्रेरी तञ्जौर इत्याख्ये संग्रहालये ६९७५ संख्याके 'पूर्वमीमांसाकारिका' 'चित्रपटः' इति नाम्ना एकः ग्रन्थ उट्टङ्कितोऽस्ति । तत्रापि च 'अथातो धर्मजिज्ञासा धर्मोऽर्थो विधिचोदितः' इत्यारभ्य 'आर्त्विज्यं ब्राह्मणा एव कुर्युः सर्वेषु कर्मसु' इत्यन्ताः श्लोकाः प्रदर्शिताः सन्ति । ते च सर्वे श्लोकाः लघुवार्त्तिकस्था एव दृश्यन्ते । तत्र लेखकस्य नाम नैव निर्दिशति । प्रतीयतेऽनेन यल्लेखकनाम नैवोप-लब्धं तैरिति । अत एव भ्रमशाद् ग्रन्थस्यापि नामान्तरं लिखितमिति सम्भाव्यते । अत्र सङ्गृहीतायां मातृकायां लेखकनाम कुमारिलस्वामी कुमारिलभट्टो वा तथा ग्रन्थनाम लघुवार्त्तिकमिति समुपलभ्यते, तर्हि लेखकविषये ग्रन्थाभिधेयविषये वा नास्ति सन्देहलेशोऽपि । तस्मात् पूर्वमीमांसाकारिका चित्रपटो वेति नामोट्टङ्कनं भ्रमोत्पादकमेव प्रतिभाति । तत्रैव चेदं लघुवार्त्तिकं कुमारिलवार्त्तिकमिति नाम्नापि व्यवहृतम् । अतोऽस्य लेखकः भट्टपाद कुमारिल एवेति वक्तुं शक्यते ।

यत्तु 'अनेन महाभागेन (श्रीकुमारिलभट्टपादेन) तन्त्रवार्त्तिकनाम्ना शबर-भाष्यं व्याख्यातम् । तच्च वार्त्तिकं प्रथमपादे (तर्कपादे) श्लोकवार्त्तिकं नाम, ततस्तृती-याध्यायतृतीयपादान्ते (निवीतान्ते) तन्त्रवार्त्तिकम्, तदग्रे च आद्वादशाध्यायं 'टुप्टीका' इति नाम्ना प्रसिद्धमस्ति । निवीतभागोत्तरवर्त्तिवार्त्तिकस्यानुष्टुप् छन्दोवत् अतिसंक्षिप्ता-क्षरतया तादृशार्थसूचकम् अनुष्टुपटीका' इति नाम वदन्तो जनाः अनुष्टुप्टीकेति नाम्नो-ऽपि संक्षिप्ताक्षरतां सम्पादयितुमिव 'टुप्टीका' इति व्यवहर्तुं प्रारभन्त इति तच्छास्त्र-

तत्त्वज्ञा वदन्ति । एषैव 'टुप्टीका' लघुवार्त्तिकमिति नाम्नापि सम्प्रदायप्रसिद्धा इति वदन्ति । तदविचारितरमणीयमेव ।

मीमांसकसम्प्रदाये क्वापि एतादृशप्रसिद्धेरप्रसिद्धत्वात् । अनुष्टुप् टीकैव टुप्टीका सञ्जाता, तदेव च लघुवार्त्तिकमिति स्वकपोलकल्पितसिद्धान्तस्य सम्प्रदायविरुद्धत्वात् । मीमांसासम्प्रदाये च 'लघुवार्त्तिकमपि किमपि भट्टपादविरचितमस्ति, अद्यावधि नैव दृष्टिपथमायातम्' इत्यस्यैव प्रसिद्धत्वात् । सर्वैरेव टुप्टीकायाः पार्थक्येन स्थितेः स्वीकाराच्च । प्रथमपादीयं श्लोकवार्त्तिकमारभ्य द्वादशाध्यायपर्यन्तं अर्थात् टुप्टीकां यावत् ग्रन्थस्य तन्त्रवार्त्तिकत्वेन प्रसिद्धत्वात् । तत्र प्रथमाध्यायस्थप्रथमद्वितीय तृतीयपादीयायाः पुष्पिकाया एव प्रमाणत्वेन स्वीकर्त्तुमर्हत्वाच्च । तस्मात् टुप्टीकैव लघुवार्त्तिकमिति सिद्धान्तः नैव रोचते परम्पराप्राप्तमीमांसाविद्यापरिशुद्धहृदयेभ्यः प्रेक्षावद्भ्यः । एवं कुमारिलस्वामिविरचितं लघुवार्त्तिकं नाम ग्रन्थरत्नं पृथगेवास्तीति निर्गलितार्थः । आश्वलायनकारिका, मानवकल्पसूत्रटीकेति ग्रन्थद्वयस्यापि रचयिता अयमेव भट्टपादः । ननु ये खलु बृहट्टीकामध्यमटीकाप्रभृति बृहतां ग्रन्थानां रचयितारः सन्ति, तेषामेतादृशलघुग्रन्थविरचने कथं प्रवृत्तिरिति चेदुच्यते— अल्पबुद्धीनां जिज्ञासूनां हिताय अनायासेन सम्पूर्णां मीमांसां ज्ञातुं चास्य प्रवृत्तेरौचित्यात् । महतैव विदुषा अतिविपुलकायमीमांसादर्शनतत्त्वानामतिसंक्षेपेण लघुभूते ग्रन्थे वक्तुं शक्यत्वात् । यथा श्रीमधुसूदनसरस्वतीपादानां प्रस्थानभेदः । तस्मान्महतां लघुग्रन्थनिर्माणेप्रवृत्तेरौचित्यमेव ।

ननु च भोः ! भिन्नोपाधिकत्वात् कुमारिलभट्टकुमारिलस्वामिनोरुचैक्यं कथं भवितुमर्हतीति चेदुच्यते—उभयोरैक्ये प्रमाणसद्भावः, अनैक्ये च प्रमाणाभावः दृश्यते । प्रमाणाभावाच्च भट्टपादेभ्यः पृथगेवायं कुमारिलस्वामी नामा कश्चन इति कल्पनाया अनौचित्यात् । प्रथमाध्यायस्य प्रथमद्वितीयतृतीयपादीयतन्त्रवार्त्तिकपुष्पिकायां कुमारिलस्वामीति नाम्ना व्यवहारात् तत्पश्चाद्भाविन्याञ्च पुष्पिकायां कुमारिलभट्ट इति नाम्ना व्यवहाराच्चोभयोरैक्यं प्रतीयते ।

अपि च तञ्जोरस्थ 'सरस्वतीमहल लाइब्रेरी' इत्याख्यस्य हस्तलेखसंग्रहालयस्य हस्तलेखसूच्यां कुमारिलवार्त्तिकनाम्ना स्पष्टमेवोदीर्यमाणत्वात् । मीमांसासम्प्रदाये लघुवार्त्तिकनाम्ना कस्यचिद् ग्रन्थस्य प्रसिद्धत्वाच्च । भगवतः कार्त्तिकेयस्यैवापरावतारभूतत्वात् कार्त्तिकेयस्य च 'कार्तिकेयस्वामी'त्याख्यया व्यवहाराच्च भट्टकुमारिलस्यापि नामान्ते स्वामिशब्दयोजनसम्भवाच्च । तस्मादुभयोरैक्यमेव समामनन्ति विज्ञाः ।

इमे चाचार्याः स्वजन्मना कं देशमङ्कुर्वाणाः आसन्निति जायते जिज्ञासा । तत्र विदुषां मतवैभिन्न्यं समवलोक्यते । केचिद् मिथिलादेशोद्भवं मैथिलकुलालङ्कार-

भूतं मन्यन्ते। तत्र च मिथिलादेशीयां पञ्चिकां प्रमाणयन्ति। पञ्चिकायां कुमारिलस्य नामोल्लेखः वर्त्तते। तदधुनापि द्रष्टुं शक्यते तेषां वंशधराश्चाद्यापि विद्यन्ते। ते च तेषां वंशधरत्वेन गौरवमावहन्ति। भट्टशब्दसम्वलितः कश्चिद् ग्रामोऽपि वर्त्तते तत्र। मीमांसायाश्च विद्वांसः मिथिलायां समभूवन्नित्यत्र तेषां ग्रन्था एव प्रमाणभूताः। पार्थसारथिमिश्रप्रभृतीनां विदुषां भट्टपादानामुपरि अतीव श्रद्धा दृश्यते। मैथिल-विद्वांसः प्रायः भट्टमतानुयायिन एव भवन्ति। अतः प्रमाणैरेतैरिदं वक्तुं शक्यते, यदिमे मिथिलादेशनिवासिन एवासन्। यथैते विद्यया सम्पन्नाः तथैव धनेनापि सम्पन्ना इति तारानाथेनाभिहितम्।

आनन्दगिरिणा चोक्तं स्वविरचितशङ्करदिग्विजये भट्टाचार्याख्यो द्विजवरः कश्चिद् उदक्देशात् समागत्य दुष्टमतावलम्बिनो बौद्धान् जैनान् असंख्यातान्........ निर्जित्य......... निर्भयो वर्त्तते। उदक्पदात् काश्मीरस्य पञ्जावप्रदेशस्य वा सङ्केतो भवितुमर्हति। अतः उत्तरदेशीयोऽयं विद्वानिति प्रतिभाति।

शालिकनाथमिश्रेण च स्वोपज्ञायां प्रकरणपञ्चिकायामेतेषां कृते वार्त्तिककार-मिश्राः' इति पदं प्रयुक्तम्। मिश्रोपाधिकाश्च ब्राह्मणा उत्तरदेशे एव सम्भवन्ति। अस्मादपि भट्टपादानामुत्तरदेशीयत्वं ज्ञायते।

केचिच्च विद्वांसः दक्षिणदेशीयोऽयं द्राविडब्राह्मण आसीदिति डिण्डिमघोषं कुर्वन्ति। सुप्रसिद्धस्य बौद्धस्य धर्मकीर्तेः पितृव्योऽयमासीदिति कथयन्ति। धर्मकीर्तिश्च चोलराजस्य त्रिमलयनामके स्थाने जन्म लेभे। तेन सह पारिवारिकसम्बन्धेन दक्षिण-देशीयत्वं सिद्धत्येव। भट्टोपाधिः दक्षिणदेशे भवतिस्म। अपरञ्च एतैः 'आश्वलायन-कारिका' लिखिता। अनेनाश्वलायनशाखायामेतेषां श्रद्धा प्रकटीभवति। आश्वलायन-शाखीयाश्च ब्राह्मणा प्रायशः दक्षिणदेशे एव भवन्ति। अत एते दाक्षिणात्या इति प्रतिभाति।

यत्तु शालिकनाथेन मिश्रोपाधिकत्वेन स्मृतमिति। तदपि विचारणीयमेव। मिश्रशब्दस्य प्रतिष्ठायामपि व्यवहृतत्वात्। तत्र प्रयुक्तः मिश्रशब्दः प्रतिष्ठावाचक एव, न तु तेषामुपाधिः। शालिकनाथमतिरिच्य कुत्रापि मिश्रत्वेनाव्यवहृतत्वात्। भट्टो-पाधिविशिष्टस्यैव कुमारिलस्य प्रसिद्धत्वात्। एतेषां पितुर्नाम 'यज्ञेश्वरभट्ट' मातुर्नाम च 'चांगुणा' आसीदिति कथ्यते।

यत्तु शङ्करदिग्विजये गिरिणोक्तम्— 'उदक्देशात् समागत्य' इत्यादि। तत्रेदं वक्तव्यम्। वैदिकधर्मविद्वेषिणां बौद्धनां मतं सम्यक् खण्डनाय बौद्धागमस्य तेषां दर्शनानां च सम्यक् ज्ञानमावश्यकम्। तत्तु केनापि बौद्धेनापि लब्धुं शक्यम्। तस्मिन् समये विश्वप्रसिद्धस्य सुप्रतिष्ठितस्य नालन्दाविद्यापीठस्यातीव प्रतिष्ठा आसीदिति तदानीन्तनग्रन्थादवगम्यते। पीठस्थविरश्च सुप्रसिद्धबौद्धमतावलम्बी

धर्मपालः समतिष्ठत । तस्मादेवाहमध्ययनं कुर्वे इति धिया प्रच्छन्नबौद्धवेषं धृत्वा तत्र जगाम समधीतवांश्च । तदनन्तरं तमपि बौद्धगुरुं पराजित्य बौद्धमतं भूरिशः अखण्डयत् । यच्च बौद्धमतमद्यापि नैवोज्जीवति । एवं दक्षिणदेशादुत्तरदेशे उत्तरदेशाद् दक्षिणदेशे गमनागमनेनापि "उदक्देशाद् समागत्य" इत्यस्य सङ्गतिर्वक्तुं शक्यते ।

अपि च कुमारिलस्य कुमारापरपर्यायेण भगवता कार्त्तिकेयेन सह सम्बन्धः योज्यते—'भगवतः कार्त्तिकेयस्यैवायमवतारभूत' इति । अत एव तन्नाम्नैवैतेषां व्यवहारः । स्वेष्टदेवता सम्बन्धिनाम्नः पुत्रादीनामद्यापि प्रसिद्धत्वात् । भगवतः कार्त्तिकेयस्य चोपासकाः दक्षिणदेशे एव दृश्यन्ते, नोत्तरदेशे । नात्र कुत्रापि कार्तिकेयोपासकाः समुपलभ्यन्ते । तस्मादपि दक्षिणदेशीयत्वं वक्तुं शक्यते । अपि च भट्टपादानां 'कुमारिलस्वामी' इत्यपि नामेति पूर्वमेवोक्तम् । स्वामिशब्दान्तश्च नाम दक्षिणदेशे दृश्यते, नोत्तरदेशे । उत्तरदेशे केवलं विरक्तसाधुष्वेव स्वामिशब्दः प्रयुज्यते, न गृहस्थेष्वपि । दक्षिणदेशे उभयत्रापि शब्दस्यास्य प्रयोगो दृश्यते । यथा—श्री कुप्पुस्वामी श्री चिन्नस्वामी इत्यादिः । अस्मादपि दक्षिणदेशीयोऽयमिति प्रतिभाति । सुप्रसिद्धेन तिब्बतीयैति हासिकेन तारानाथेन च 'चोस् ब्युङ्' नामके ग्रन्थेऽस्य दाक्षिणात्यत्वमेव प्रतिपादितम् । तन्त्रवार्त्तिके यथा द्राविडभाषायाः मूलतः प्रयुज्यमानाः शब्दाः प्रयुक्ताः दृश्यन्ते, न तथा केषाञ्चिदप्युत्तरदेशीयविदुषां ग्रन्थेषु समुपलभ्यन्ते । स्वदेशीयायाः भाषायाः स्वदेशीयस्यैव सम्यक् ज्ञानं भवति नान्यदेशीयस्य । इदमपि दाक्षिणात्यत्वे प्रमाणम् । यत्तु तेषां मैथिल पञ्चिकायां नाम दृश्यते इति । सोऽन्योऽपि कश्चिद् विद्वान् आसीदिति परिकल्पयितुं शक्यते । अथवोत्तरदेशेऽपि कदाचिन्निवासः कृत इति कल्पयितुं शक्यते । एवञ्चोभयत्र प्रमाणं पश्यामः । ग्रन्थकारैश्च स्वदेशविषये न किमप्युल्लिखति । अथ च आचारप्रामाण्यप्रसङ्गे तन्त्रवार्त्तिके यत्र कुत्र देशेऽपि प्रचलितानां शास्त्रविरुद्धानामाचाराणां स्पष्टतः निन्दादर्शनात् कमपि देशविशेषं प्रति श्रद्धा आसीदिति वक्तुमशक्यत्वात् । तस्मात् स्वजन्मना कं देशमलङ्कुर्वाणाः आसन्निति वयं निश्चेतुं नैव शक्नुमः ।

एतेषामाचार्यपादानां कालविषये नास्ति विचिकित्सा केषामपि विदुषाम् । इमे खलु खृष्टीये सप्तमशतके इमां भूमिमलञ्चक्रुः । यतो हि भगवत्पादेन श्रीमता शङ्कराचार्येणास्य पुरुषोत्तमक्षेत्रे प्रयागे साक्षात्कारः सञ्जात इति सर्वे जानन्त्येव । एवमेव धर्मपालेन समधीतवान् इत्यपि प्रसिद्धमेव । उभयोरप्याचार्ययोः कालः सप्तमशतक एव मन्यन्ते । तस्मदेतेषामपि स एव काल इति निश्चीयते ।

प्रकृतमनुसरामः । लघुभूतस्यास्य लघुवार्त्तिकस्य प्रतिपाद्याः विषयाः प्रदर्श्यन्ते । यस्मादिदं लघुवार्त्तिकं समग्रां मीमांसामभिव्याप्नोति, तस्माद् ये विषयाः मीमांसादर्शनस्य त एवास्यापि ग्रन्थस्येति मन्तव्यम् । मीमांसायाः धर्म एव मुख्यः प्रतिपाद्यः, तदुपोद्बलकतया च प्रमाणादीनामपि प्रतिपादनं सङ्गच्छते । तदुक्तं भट्टपादेनैव

श्लोकवार्त्तिकारम्भ एव—'धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम्' इति । द्वादशसु चाध्यायेषु क्रमशः प्रमाणभेदशेषत्वप्रयुक्तिक्रमाधिकारसामान्यातिदेशविशेषातिदेशोह बाधतन्त्रप्रसङ्गरूपाः विषयाः प्रतिपादिताः सन्ति । तत्राध्यायानुसारमस्य ग्रन्थस्य विषयाः संक्षेपेण प्रदर्श्यन्ते ।

**तत्र प्रथमाध्याये प्रथमपादे**— विधिचोदितस्य धर्मस्य स्वरूपम्, तत्र यानि प्रमाणानि भवन्ति, तेषां निरूपणम्, तेषां परीक्षा, शब्दानां नित्यत्वम्, वेदानाञ्चापौरुषेयत्वं प्रतिपादितम् ।

**द्वितीये पादे**—अर्थवादानां स्तुतिप्रतिपादकत्वेन प्रामाण्यम्, विधिवन्निगद्यमानानां हेतुवन्निगद्यमानानाञ्चार्थवादानां स्तावकत्वनिर्णयः, मन्त्राणाञ्च पदार्थस्मारकत्वेन प्रामाण्यमभिहितम् ।

**तृतीये पादे**— वेदमूलकत्वात्स्मृतीनां प्रामाण्यम्, वेदविरुद्धानां स्मृतीनामप्रामाण्यम्, यवादिशब्दानां वाक्यशेषानुसारमर्थनिर्णयः, वेदाविरोधेन म्लेच्छव्यवहृतस्यापि शब्दस्य प्रामाण्यम्, कल्पसूत्राणां पौरुषेयत्वम्, लौकिकवैदिकशब्दानामैक्यप्रतिपादनम् । आकृतिः शब्दार्थः व्यक्तेश्चाक्षेपाद् ज्ञानप्रतिपादनम् । वेदबाह्यानां शास्त्राणामप्रामाण्यमित्यादयः विषया आकलिताः सन्ति ।

**चतुर्थे पादे**— कर्मनामधेयनिरूपणमारभ्य अञ्जनद्रव्यनिर्णयपर्यन्तं सर्वेषां विषयाणां निरूपणं वर्त्तते ।

**द्वितीयेऽध्याये प्रथमपादे**— सर्वेभ्यः पदेभ्यः धर्मप्रतिपादनाभाव; अपूर्वस्य चिरस्थायित्वम्, संयवनादिगुणानाम् मन्त्रब्राह्मणादिलक्षणानि, ऊहस्वरूपम्, ऋगादिलक्षणानि च प्रतिपादितानि सन्ति ।

**द्वितीये पादे**— शब्दान्तरादिभिः कर्मभेदः निरूपितः ।

**तृतीये पादे**— रथन्तरसामेति गुणात् कर्मभेदाभावः, यदि ब्राह्मण इत्यादिना वाक्यानामवेष्टिबोधकत्वम्, वसन्ते ब्राह्मणोऽग्नीनादधीत इत्यादीनाञ्चाधानबोधकत्वं प्रतिपादितम् ।

**चतुर्थे पादे**— नित्यकाम्यकर्मणोः परस्परं भेदः प्रतिपादितः ।

**तृतीयाध्यायस्य प्रथमे पादे**— अङ्गत्वबोधकानां श्रुतिलिङ्गादिप्रमाणानां मध्ये श्रुतेर्विचारः ।

**द्वितीये पादे**— लिङ्गस्य स्वरूपम्, तस्य प्राबल्यदौर्बल्यविचारः कृतः ।

तृतीये पादे— वाक्यप्रकरणस्थानसमाख्यानां विचारः ।

चतुर्थे पादे— निवीतोपवीतादिषु अर्थवादत्वविधित्वादिनिर्णयहेतुत्वम्, श्रुत्यादीनां परस्परविरोधसदसद्भावविवेकः ।

पञ्चमे पादे— उपयुक्तस्याकीर्णकरतानिवर्त्तकरूपाणि प्रतिपत्त्याख्यानि कर्माणि विचारितानि ।

षष्ठे पादे— अनारभ्याधीतानां वाक्यानां निरूपणम् ।

सप्तमे पादे— बहुप्रधानोपकारकाणि प्रयाजादीनि निरूपितानि सन्ति ।

अष्टमे पादे— परिक्रयादीनि याजमानकार्याणि निरूपितानि ।

**चतुर्थाध्यायस्य प्रथमे पादे—** प्रधानप्रयोक्तृत्वं विचारितम् । यथा प्रधानभूतामिक्षा दध्यानयनस्य प्रयोजिकेत्यादि ।

द्वितीये पादे— अप्रधानप्रयोक्तृत्वम् । यथा शाखोच्छेदे वत्सापाकरणं प्रयोजकं भवति ।

तृतीये पादे— यस्य पर्णमयी जुहूर्भवतीत्यादौ जुह्वाः पर्णमयीत्वादेरपापश्लोकश्रवणादिफलभावाभावविचारः ।

चतुर्थे पादे—राजसूयेऽङ्गभूतानां अक्षद्यूतादीनां निरूपणम् ।

**पञ्चमाध्यायस्य प्रथमे पादे—** क्रमबोधकानि श्रुत्यर्थपाठस्थानमुख्यप्रकृतिरूपाणि प्रमाणानि निरूपितानि ।

द्वितीये पादे— वाजपेययागाङ्गभूतसप्तदशपशुषु एकैकधर्मपरिसमापनमित्यादि क्रमविशेषस्य चिन्ता ।

तृतीये पादे— समिधो यजति, तनूनपातं यजति, इडो यजति बर्हिर्यजति, स्वाहाकारं यजतीत्यादिपञ्चप्रयाजानामावर्त्तनम् । ततश्चैकादश्यादिवृद्धिर्भवति । एवं अदाभ्यग्रहचित्रिण्योरावृत्तिर्न भवति । ततश्च तत्र वृद्ध्यभावः ।

चतुर्थे पादे— क्रमबोधकानां श्रुत्यादिप्रमाणानां प्राबल्यदौर्बल्यविचारः ।

**षष्ठाध्यायस्य प्रथमे पादे—** अधिकारी निरूपितः । अन्धमूकबधिरादीनामधिकाराभावः, स्त्रियाश्च पत्या सहैवाधिकार इत्यादिविषयाः निरूपिताः ।

द्वितीये पादे— सत्रेषु सर्वेषामधिकारिणां प्रत्येकं सम्पूर्णं फलम् दर्शपूर्णमासयोरेकस्यैव कर्तृत्वम् काम्यं कर्म समापनीयमित्यादीनां विषयाणां विचारः कृतः ।

तृतीये पादे — प्रतिनिधिविचारः । यथा द्रव्याणां प्रतिनिधिर्भवति, देवादीनाञ्च न भवतीत्यादिविषयाः विचारिताः ।

चतुर्थे पादे— पदार्थलोपनं निरूपितम् ।

पञ्चमे पादे— अभ्युदयेष्टौ प्रायश्चित्तं तथा दीक्षाविचारः कृतः ।

षष्ठे पादे— सत्राधिकारिणां तुल्यकल्पत्वं तथा विप्रस्यैव सत्रं भवतीत्यादिविचारितः ।

सप्तमे पादे— देयविचारः । यथामहाभूमिर्न देयेत्यादयः ।

अष्टमे पादे— उपनयनहोमः लौकिकाग्नौ कर्त्तव्यः इत्येवमाद्यग्निविचारः कृतः ।

**सप्तमाध्यायस्य प्रथमे पादे**— 'समानमितरत्' इत्यादिना प्रत्यक्षवचनातिदेशः कृतः ।

द्वितीये पादे— पूर्वोक्तातिदेशस्य शेषो विचारितः ।

तृतीये पादे— अग्निहोत्रादिनाम्नातिदेशः ।

चतुर्थे पादे— निर्वापसम्बन्ध्यौषधद्रव्यादिलिङ्गातिदेशः ।

**अष्टमाध्यायस्य प्रथमे पादे**— स्पष्टलिङ्गेनातिदेशविशेषः विचारितः । यथा—सौर्यचरावातिदेशिकानि निर्वापः, तद्धितप्रत्ययेन देवतानिर्देश इत्यादिः ।

द्वितीये पादे— अस्पष्टैर्लिङ्गैरतिदेशः ।

तृतीये पादे— लिङ्गप्राबल्यप्रयुक्तातिदेशः विचारितः ।

चतुर्थे पादे— दर्विहोमानां कर्मनामत्वं प्रतिपादितम् ।

**नवमाध्यायस्य प्रथमे पादे**— सवित्रश्विपूषशब्दानां विकृतिषूहाभावः अग्निशब्दस्य चोह इत्यादिकः विचारः कृतः ।

द्वितीये पादे— सपरिकरः साम्नामूहः विचारितः ।

तृतीये पादे— मन्त्राणामूहः ।

चतुर्थे पादे— मन्त्रोहप्रसङ्गे आपतितानां विषयाणां विचारः कृतः ।

**दशमाध्यायस्य प्रथमे पादे**— बाधहेतुभूतः द्वारलोपो निरूपितः ।

द्वितीये पादे — द्वारलोपस्यैव विस्तारः ।

तृतीये पादे— बाधकारणानि निरूपितानि ।

चतुर्थे पादे— उपहोमानां नारिष्ठहोमैः सह समुच्चयः ।

पञ्चमे पादे— बाधप्रसङ्गपतितग्रहादिविचारः ।

षष्ठे पादे— बाधप्रसङ्गागतसामविचारः ।

सप्तमे पादे— बाधप्रसङ्गे नैवानेकेषां विषयाणां विचारः ।

अष्टमे पादे— बाधोपयुक्तनञर्थविचारः ।

एकादशाध्यायस्य प्रथमे पादे— विचार्यमाणस्य तन्त्रस्योपोद्घातकः समुपवर्णितः ।

द्वितीये पादे— संक्षेपेण तन्त्रावापौ निरूपितौ ।

तृतीये पादे— तन्त्रस्यैव प्रपञ्चः ।

चतुर्थे पादे— आवापः प्रपञ्चितः ।

द्वादशाध्यायस्य प्रथमे पादे— पशुधर्माणां पशुपुरोडाशे प्रसङ्ग इत्यादिविषयाः विचारिताः ।

द्वितीये पादे— तन्त्रिणी विकृतिरेव भवति, न प्रकृतिः । अन्वारम्भणीया प्रकृतावेव न भवति, अपि तु विकृतिष्वपीति विचारः ।

तृतीय पादे— त्वग्वाससोः समुच्चयः प्रतिपादितः ।

चतुर्थे पादे— ऐन्द्रबार्हस्पत्ययोः याज्यानुवाक्ययोर्विकल्पः याज्यानुवाक्ययोः समुच्चय इत्युभयं चिन्तितम् । एवं द्वादशाध्यायानां तदन्तर्गतषष्ठिपादानां च प्रतिपाद्याः विषया माधवाचार्यमनुसृत्यातिसंक्षेपेण प्रदर्शिताः ।

अस्य लघुवार्त्तिकस्यैका टीकापि समुपलब्धा । टीकायां सौष्ठवं वर्त्तते । यात्र सम्पादितास्ति, सा द्वितीयाध्यायमारभ्य षष्ठाध्यायस्य पादद्वयं यावदेव वर्तते । जम्मूस्थ रघुनाथमन्दिरात् एतावत्येव प्राप्ता । विषयस्फोरणदृष्टया टीकातीव सफला वर्त्तते । श्लोकं, श्लोकार्द्धं, श्लोकपादं वाधिकृत्य टीकिता ग्रन्थकारेण । मूलग्रन्थस्यातिसंक्षिप्तत्वात् न तत एव समेषां विषयस्फूर्तिः स्यादिति धिया टीकाकारेण सर्वजनहिताय टीकां लिखितेति मन्ये । टीकायां विषयाणां स्पष्टीकरणाय कृतप्रयत्नोऽयं विद्वानिति दृश्यते । अनया टीकया अल्पधियामपि जिज्ञासूनां समुचितः लाभः स्यादिति मन्ये । टीका

नातीव विस्तृता नातीव च संक्षिप्ता वर्त्तते। विषयप्रतिपादनदृष्टयाल्पत्वं महत्त्वं वावलोक्यते।

यया मातृकया सम्पादितं मया, तस्याः आद्यन्तविहीनत्वात् लेखकस्य परिचयः नैवाववोद्धुं शक्यते, परन्तु वाराणसीस्थसरस्वतीभवनहस्तलेखसूच्यां टीकायाः समुल्लेखः दृश्यते। तत्र च श्रीउत्तमश्लोकतीर्थः लेखकत्वेन स्मृतः। एवमेव तञ्जौरस्थ 'सरस्वतीमहललायब्रेरी' इत्याख्ये संग्रहालये लघुवार्त्तिकटीका लघुन्यायसुधा नाम्ना निर्दिष्टास्ति। तत्र प्रथमाध्यायस्य प्रथमस्य पादस्य टीकायाः समुल्लेखो नैव दृश्यते। द्वितीयपादतः— अर्थवादमन्त्रनामधेयानि न धर्मे प्रमाणानि। तेभ्यस्तत्प्रमित्यनुदयात्। अर्थवादानामाख्यायिकादिप्रतिपादनेन निराकाङ्क्षतया सन्निहितविध्येकवाक्यत्वायोगात्। अध्ययनविधेश्च तदंशेऽदृष्टत्वादिति चेत्— 'मन्त्रार्थवादप्रमुखाः प्रमाणानीति वार्त्तिके' इत्यारभ्य आर्त्विज्यमध्ययनसम्पन्नास्त्रयोऽपि कुर्युः। याजनाध्यापनप्रतिग्रहा ब्राह्मणस्यैव वृत्त्युपाया इति नियमनस्य पुरुषार्थत्वात्, इत्यादि। अतस्त्रयोऽप्यृत्विजः सर्वकर्मस्विति चेत्— "आर्त्विज्यं ब्राह्मणा एव कुर्युः सर्वेषु कर्मसु" इत्यादि निर्दिष्टं वर्तते। प्रथमाध्यायप्रथमपादवर्जितस्य समग्रस्य लघुवार्त्तिकस्येयं टीका तत्रोपलभ्यते। टीकाकारश्च उत्तमश्लोकतीर्थं एवेति पुष्पिकया ज्ञायते। तथा हि—

जैमिनिन्यायपुष्पमालेयं परमेश्वर।
त्वत्पादयुग्मभूषास्तु ऋजुना मां पथा नय ॥१॥

विश्वेश्वरप्रेरितेन श्रितविश्वेशमूर्तिना।
उत्तमश्लोकतीर्थेन तत्प्रीत्यै ग्रथिता स्फुटम् ॥२॥

अनेन उत्तमश्लोकतीर्थं एव टीकाकार इति स्पष्टं प्रतीयते। अन्ते च 'इति लघुवार्त्तिकटीकायां लघुन्यायसुधाख्यायां द्वादशाध्यायस्य चतुर्थः पादः। समाप्तश्चाध्यायः' इत्युट्टङ्कितं वर्तते। अतः टीकाकारः उत्तमश्लोकतीर्थः टीका च लघुन्यायसुधा नाम्नी भवतीति विज्ञायते। एवमेव सरस्वतीभवनस्य हस्तलेखसूच्यामपि निर्दिशति। तञ्जौरस्थहस्तलेखसूच्याम् (गम्भीरराजात्मजस्येदम्, इति लिखित्वा आङ्ग्लभाषायां किञ्चिल् लिखितमस्ति। तस्यायं संक्षेप— "लघुन्यायसुधा कुमारिलवार्त्तिकमधिकृत्य एका संक्षिप्ता टीका लिखिता वर्तते। अस्या एव टीकायाः लघुवार्त्तिकटीका लघुन्यायसुधा वा नाम्ना व्यवहारः दृश्यते। इयञ्च सम्पूर्णं वार्तिकग्रन्थं व्याप्नोति। अस्याः लेखकः उत्तमश्लोकतीर्थः वर्तते" इत्यादि। अतः कुमारिलवार्त्तिकं लघुवार्त्तिकं वा तस्य च टीका लघुवार्त्तिकटीका लघुन्यायसुधा वा न विभिन्नं वर्तते, अपि त्वेक एवेति।

अयञ्च लेखकः तीर्थोपाधिना विभूषितः कश्चिद् सन्यासी आसीदिति ज्ञायते। श्रीस्वयंप्रकाशयतिना सहास्य संबन्धोऽपि प्रतीयते। तेषामयं शिष्यो न वेति न

निश्चिनुमः। एते च वाराणस्यामेव निवसन्तिस्म । एतेषां जन्मभूमिः क्वेत्यत्र किमपि वक्तुमशक्यम् । काश्यां निवसद्भिरेवैभिष्टीकेयं विरचितेति प्रतीयते । अष्टादशतमे शतके एवैतेषामाविर्भाव इत्यैतिह्यविदः वदन्ति ।

लघुवार्त्तिकस्यास्य संपादनसमये बहुप्रयत्नेन मातृकाद्वयमुपलब्धम् । प्रथमा गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठीयसंग्रहालये विद्यमानास्ति । ग्रन्थसंख्या च ३८/७०९ वर्तते । लिपिः देवनागरी, पत्रसंख्या ६८ पूर्णा सुस्पष्टा च मातृका विद्यते । न कुत्रापि त्रुटिता दृश्यते । मातृका प्रायः शुद्धैव । प्रतिलिपिकारश्च मेवामिश्रः काशी निवासी कश्चिद् ब्राह्मणोऽस्ति । लिखितं च तैरेवान्ते— 'सर्वशास्त्रसमालोकी मेवामिश्रो हि लेखकः' इति । प्रतिलिपिकालश्च आ. शु. १३ सं. १९५२ इति निर्दिशति । आधारश्च कर्गदपत्राण्येव । ग्रन्थकारत्वेन कुमारिलस्वामी निर्दिष्टः ।

अपरा च मातृका वाराणसीस्थसरस्वतीभवनात् समुपलब्धा । सापि प्रायः शुद्धा सुस्पष्टाक्षरा चास्ति । ग्रन्थसंख्या २८९११, क्रमसंख्या १५, कर्गदपत्राणि च ७१ सन्ति । ग्रन्थकारत्वेन कुमारिलभट्टोल्लिखितम् । अक्षरसंख्या पंक्तौ १६, पंक्ति-संख्या पृष्ठे १३, आधारः कर्गदम्, लिपिः देवनागरी, प्रतिलिपिकारश्च स एव मेवामिश्रः । लिखितं स्वयमेवात्रापि 'व्यलेखि मेवामिश्रेण' इति । प्रतिलिपिकालश्च मि. कु. शुक्ल सं. १९५३ इति । उभयोः मातृकयोर्नैव भेदं पश्यामः । आधारद्वयेनैव सम्पादितमिदं लघुवार्त्तिकम् । टीकायाश्च विवरणं पूर्वमभ्युक्तम् । अस्या एकैव मातृका, साप्याद्यन्तविहीना समुपलब्धा । अपरा अपि मातृकाः सन्ति, परन्तु खेदस्यायं विषयः यत् कृतपरिश्रमेणापि मया नोपलब्धास्ताः ।

एका सा तञ्जोरस्थ संग्रहालये वर्तते, परन्तु तत्रत्याः अधिकारिणस्तद्दर्शनं निषेधितवन्तः सरस्वतीभवनस्य च दुर्व्यवस्थया नैव ग्रहीतुं प्रभुरहमभवम् । अतः एकयैव मातृकया प्रतिलिपिं कृत्वा यथाबुद्धि संशोध्य सम्पादिता । संपादने याः काश्चिद् त्रुटयः समभूवन् तत्र क्षन्तव्योऽहं क्षमाशीलैः विद्वद्वरेण्यैः ।

सम्पादनकार्येऽस्मिन् येभ्यः विद्वद्वरेण्येभ्यः साहाय्यं प्राप्तवानहम्, तेभ्यः सर्वेभ्यः हार्दिकीं कृतज्ञतां सप्रश्रयमर्पयामि । तेषु सर्वप्रथमं पूज्यपादानामस्मद्गुरुवर्याणां डा० गजाननशास्त्रिमुसलगाँवकरमहोदयानां चरणकमलयोः भूयोभूयः प्रणमामि, एषामनुकम्पैव मन्ये सुदुस्तरमपि मीमांसासागरमनायासमुदतीतरम् । एते संपादन-कार्येऽपि यथासमयं मार्गनिर्देशनं कुर्वन्त आसन् । किमधिकं वक्तुं शक्यते एतेषां विषये ।

एतद्विद्यापीठे गरीयांसं प्राचार्यपदमलङ्कुर्वाणानां प्राच्यप्रतीच्योभयविद्यामर्मज्ञानां डॉ० श्रीगयाचरणत्रिपाठिमहोदयानां कृतज्ञतामाबिभर्मि, येषां कृपयैव शोध-

पूर्णमिदं संपादनकार्यं मया निर्व्यूढम्, तथा अनेकशः समुचितैर्निदेशैर्मामकीनमुत्साहं समेधितवन्तः ।

विद्यापीठेऽस्मिन् आगमनानन्तरमिदमपि मदीयं सौभाग्यमेव यन्नैयायिक वरेण डॉ० किशोरनाथ झा महोदयेन सह कार्यं कर्त्तुमवसरः संप्राप्तः। तेषां वैदुष्यं सारल्यञ्च नैव विस्मरामि । यथासमयं समुचितं परामर्शं दत्त्वैतेऽनुगृहीतवन्तो माम् । सम्पादनकार्येऽप्यस्मिन्नतीव साहाय्यं कृतवन्तः। अतएव कार्यमिदं शोभनं विद्वज्जन-ग्राह्यञ्चाभवदिति मन्ये । एतेषां कृते बहुवक्तव्यमपि स्वल्पमेव प्रतिभाति । अतः तेषां प्रति सर्वदैव कृतज्ञोऽहमिति विज्ञाप्य विरमामि। वाक्यसंयम एवात्र शरणीकरणीयः। मातृकायाः कानिचित् पत्राणि अस्पष्टाक्षराणि आसन् । तदर्थं प्रार्थितेन डॉ० राघव-प्रसादचौधरी महाभागेन त्वरितमेव पुनः तावतामंशानां प्रतिलिपिप्रेषणेन अनुगृहीतोऽहम्। अतस्तेभ्यः कृतज्ञतां ज्ञापयामि। टीकायाः त्रुटितांशपठनसमये पण्डित श्री रामकिशोर झा शुभोदयस्यापि साहाय्यमधिगतं मया। अतस्तेभ्यो धन्यवादाशीर्वाद-वितरणं स्वकीयं परिपूतं कर्त्तव्यमिति मन्ये । एतद्विद्यापीठीयसंग्रहाध्यक्षेभ्यः श्रीजीवेश्वर झामहोदयेभ्योऽनेकशः धन्यवादा दीयन्ते । ते खलु यथासमयं सौहार्दभावेन हस्तलेखं सुरक्षितं दत्तवन्तः। अन्यस्मादपि स्थानात् पत्राचारादिकं कृत्वा हस्तलेखं प्रापितवन्तः। अत एवेदं कार्यं शीघ्रं सम्पन्नमिति मन्ये। मया सह तेषां हार्दः सहयोग. आसीत्। तदनन्तरं मुद्रणालयाधिकारिभ्यः सीसकाक्षरयोजकेभ्यश्च धन्यवादा वितीर्यन्ते। यदेतेषां सहयोगेनैव कार्यं सम्पन्नमिति विज्ञपयामि—

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ॥

इति

विनयावनतः

**कमलनयनशर्मा**

प्रयागस्थः

कुमारिलस्वामिप्रणीतम्

# लघुवार्त्तिकम्

## अथ प्रथमोऽध्यायः

### प्रथमः पादः

अथातो धर्मजिज्ञासा धर्मोऽर्थो विधिचोदितः ।
तत्प्रमाणं परीक्ष्यं स्यान्नाक्षाद्यैस्तत्प्रमीयते ॥१॥

विधिस्तस्मिन्मानमेव नित्यः शब्दः परा[दा]त्मकः ।
नित्यानि वेदवाक्यानि नानित्यानि समाख्यया ॥२॥

### द्वितीयः पादः

मन्त्रार्थवादप्रमुखाः प्रमाणानीति वार्त्तिके ।
स्युरर्थवादाः स्तुत्यर्थाः विधिवन्निगदास्तथा ।
हेतुवन्निगदास्तद्वन्मन्त्रः स्मृत्युपकारिणः ॥३॥

### तृतीयः पादः

स्यात्स्मृतीनां प्रमाणत्वं मूलवेदानुमानतः ।
न च श्रुतिविरुद्धानां न च मूलान्तरस्पृशाम् ॥४॥

श्रौतक्रमविरोधेन नाचामस्मृत्यमानता ।
अर्था यवादिशब्दानां वाक्यशेषानुसारिणः ॥५॥

अन्याविरोधे मानत्वं म्लेच्छव्यवहृतेरपि ।
न वेदाः कल्पसूत्राणि होलाकाद्यव्यवस्थितम् ॥६॥

मानं व्याकरणं नान्ये शब्दार्थौ लोकवेदयोः ।
शब्दार्थं आकृतिर्व्यक्तौ लक्षणाक्षेपसम्भवात् ॥७॥
अविरोधादौ च यवाद्भिद्यन्ते वार्त्तिके नयाः ।
श्रुतिस्मृत्योर्विरोधे द्राग्विश्रम्भः श्रुतिबांधिते ॥८॥
बाह्यशास्त्रं च नापेक्ष्यं शिष्टाचारस्य मानता ।
यद्याचारे विगानं स्यान्नादृत्यो दृष्टहेतुकः ॥९॥
बलिन्यायंव्यवहृतिर्म्लेच्छानां व्यवहारतः ।
त्रिवृदादिपदार्थश्च स्तोत्रिया नवकादिकम् ॥१०॥

## चतुर्थः पादः

प्रामाण्यमुद्भिदादीनामविशेषेण वार्त्तिके ।
कर्मनामोद्भिदादि स्याच्चित्राज्यादिपदं तथा ॥११॥
तथाघारस्तथा श्येनो वाजपेयफलं तथा ।
आग्नेयादिर्गुणविधिर्जात्यर्थे बर्हिराज्यके ॥१२॥
यौगिकः प्रोक्षणीशब्दो निर्मन्थ्योऽपि तथाविधः ।
नाम स्याद्वैश्वदेवोऽष्टाकपालादिवचः स्तुतिः ॥१३॥
तत्कार्यकारिता भक्तौ निमित्तत्वं क्वचिद् व्रजेत् ।
क्वचिदेकप्रभवता क्वापि तेन सरूपता ॥१४॥
क्वचित्प्रशस्तता तत्र निमित्तत्वं प्रपद्यते ।
क्वचिद्भूमा क्वचिल्लिङ्गं समवायस्तु केवलः ॥१५॥
संदिग्धमञ्जनद्रव्यं निर्णेयं वाक्यशेषतः ।
अवदाने स्रुवादीनां सामर्थ्येन व्यवस्थितिः ॥१६॥

॥ इति प्रथमोऽध्यायः ॥

---

# अथ द्वितीयोऽध्यायः

## प्रथमः पादः

धर्मः प्रतिपदं नास्ति भावार्थेभ्यश्च तज्जनिः ।
अस्ति धर्मश्चिरस्थायी गुणः संयवनादिकः ॥१॥

प्रोक्षतीत्याद्यपि तथा प्रधानं स्तौतिशंसती ।
ददातियजतीत्याद्या मन्त्रस्था न विधायकाः ॥२॥

मन्त्रास्ते ये प्रयोगार्थमनुष्ठेयाभिधायकाः ।
वेदेषु मन्त्रभागान्यो भागो ब्राह्मणमुच्यते ॥३॥

ऊहप्रवरनामानि प्रपद्यन्ते न मन्त्रताम् ।
पादबन्धवती ऋक् स्याद् गीतिः सामेति गीयते ॥४॥

यजुर्मन्त्रस्तदितरो निगदोऽपि भवेद् यजुः ।
यावत्साकाङ्क्षमेकार्थं तावदेकं यजुर्मतम् ॥५॥

इषे त्वादौ न मन्त्रैक्यं विनियुक्त्यर्थ[1]भेदतः ।
आकाङ्क्षयानुषङ्गः स्यात् 'यात' इत्यादिके मनौ ॥६॥

चित्पतिस्त्वेत्यादिकेव क्रियैकत्ववशाद् भवेत् ।
सं यज्ञपतिरित्यत्र व्यवायान्नानुषज्यते ॥७॥

## द्वितीयः पादः

शब्दान्तरे कर्मभेदः स्यादभ्यासे च तद्भिदा ।
सङ्ख्यानुवादके विद्वद्वाक्येन त्वन्तरा वचः ॥८॥

---

१. भेदक इति मूलम.तृकापाठः ।

नाप्याघाराग्निहोत्रोक्तिर्नाप्युक्ती पशुसोमयोः ।
प्राजापत्येषु पशुषु संख्यया कर्मणां भिदा ॥९॥

अथैष ज्योतिरित्यादौ तद्भेदो नामभेदतः ।
गुणाद्वाजिनयागस्य त्वामिक्षायागतो भिदा ॥१०॥

न चाग्निहोत्रतो भिन्ना दधिहोमादयो मताः ।
दध्नेन्द्रियेति कामाय गुणमात्रं विधीयते ॥११॥

कामाय रेवतीवाक्ये कर्मान्तरविधिर्भवेत् ।
हीषाद्या नियतास्तत्तत्फलार्थे साम्नि सौभरे ॥१२॥

## तृतीयः पादः

न रथन्तरसामेति गुणात् कर्मान्तरम्भवेत् ।
यदि ब्राह्मण इत्याद्यमवेष्टिप्रापकं वचः ॥१३॥

वसन्तादिवचोऽप्येवमाधानप्रापकं मतम् ।
स्याद्दाक्षायणयज्ञादौ गुणस्यैव फले विधिः ॥१४॥

नालम्भे स्याद् गुणविधिर्वायव्यमिति दार्शिके ।
अग्निहोत्रे विधिर्यत्समालभेतेति संस्कृतेः ॥१५॥

चरूपधानवचनं न यागस्य विधायकम् ।
पर्यग्नीकृतवाक्यं स्यात्त्वाष्ट्रे गुणविधायकम् ॥१६॥

अंश्वदाभ्यं ग्रहगिरो न यागान्तरगोचराः ।
अग्निं चिनुत इत्यत्राप्येवं संस्कारगो विधिः ॥१७॥

मासाग्निहोत्रं नित्यं स्याद्भिन्नं प्रकरणान्तरात् ।
भिद्येत रुक्कामाग्नेयो दार्शिकाग्नेययागतः ॥१८॥

सान्निध्याद्देशकालाद्यैर्न कर्मान्तरता भवेत् ।
कालद्वययुताग्नेयाद्भिद्यते नैककालयुक् ॥१९

## चतुर्थः पादः

काम्यात्प्रयोगाद्दर्शादेर्नित्योऽसौ प्रविभिद्यते ।
अग्निहोत्रादिकं कर्म शाखाभेदान्न भिद्यते ॥२०॥

॥ इति द्वितीयोऽध्यायः ॥

---

# अथ तृतीयोऽध्यायः

## प्रथमः पादः

शेषलक्षणमारभ्यं पारार्थ्यं शेषतोच्यते ।
द्रव्यादिवत्कर्मफलपुरुषेष्वपि सा भवेत् ॥१॥

अवघाताद्यौषधादौ यथायोगं व्यवस्थितम् ।
स्फ्यादिनोद्धननाद्येव क्रय एवारुणो गुणः ॥२॥

न विवक्ष्यं ग्रहैकत्वं ग्रहत्वं तु विवक्षितम् ।
साप्तदश्यमरत्नीनां पश्वङ्गं यूपगामि सत् ॥३॥

अभिक्रमः प्रयाजाङ्गमिष्टचङ्गमुपवीतकम् ।
पात्राणि सर्वयज्ञाङ्गं वार्त्तिके नास्त्ययं नयः ॥४॥

स्याद् वार्त्रघ्नीवृधन्वत्योः कालभेदाद् व्यवस्थितिः ।
कर्त्तव्यसर्वकर्माङ्गं हस्तादेरवनेजनम् ॥५॥

आग्नेयस्यैव हविषश्चतुर्धाकरणं भवेत् ।

## द्वितीयः पादः

मन्त्राणां मुख्य एवार्थे विनियोगः प्रचक्षते ॥६॥

विनियोगस्तु वचनादैन्द्र्या वै गार्हपत्यके ।
हविष्कृदेहि मन्त्रस्य नावघाताङ्गता भवेत् ॥७॥

तथा विसर्जनोत्थाने व्रतमग्नोदिति द्वयोः ।
अङ्गता सूक्तवाकस्य प्रस्तरप्रहृतौ मता ॥८॥

तस्य पर्वद्वये लिङ्गाद् विभज्य विनियोजनम् ।
क्रमाद्याज्यानुवाक्यानामैन्द्रयाग्न्यादिषु सङ्गतिः ॥९॥

आग्नेयी प्रकृतैव स्यादाग्नीध्राग्नेरुपस्थितौ ।
लिङ्गैर्भक्षानुवाकस्य विभज्य विनियोजनम् ॥१०॥

मन्द्राभिभूतिरित्यादेर्न तृप्तौ विनियोज्यता ।
अनैन्द्रेष्विन्द्रपीतस्य नैवोहविनिवर्त्तते ॥११॥

ऊहे तु मैत्रावरुणादिष्विन्द्रोऽप्युपलक्षणम् ।
पात्नीवतग्रहेणैन्द्रवाय्वाद्या उपलक्षणम् ॥१२॥

न त्वष्टा तत् त्रयस्त्रिंशन्न देवोऽनुवषट्कृतेः ।
निवृत्तिर्यद्यनैन्द्रेभ्यस्तदैन्द्राग्नममन्त्रकम् ।
गायत्रच्छन्दस इति स्याच्छन्दोऽन्तरवत्यपि ॥१३॥

## तृतीयः पादः

उच्चैस्त्वाद्या वेदधर्माः स्युरुपक्रमगौरवात् ॥१४॥

प्रधानवेदधर्माणो वेदान्तरगता गुणाः ।
स्यात्प्रधानविधिस्तत्र यत्र वेदेऽधिकाङ्गता ॥१५॥

प्रयाजानां प्रकरणाद्दब्धेस्तु क्रमतोऽङ्गता ।
कर्त्तारोऽध्वर्युहोत्राद्या[1] नियम्यन्ते समाख्यया ॥१६॥

श्रुतेर्लिङ्गं ततो वाक्यं ततः प्रकरणं तथा ।
ततः स्थानं ततोऽप्याख्या दुर्बलत्वं प्रपद्यते ॥१७॥

---

१. होत्राया इति क मातृका पाठः ।

प्रसक्त्या युज्यते प्राप्तावप्राप्तावपि बाधनम् ।
उपसद् द्वादशत्वं स्यादहीनक्रतुगोचरम् ॥१८॥

युवं हि स्थ स्वरित्यस्योत्कर्षो द्वियजमानके ।
उत्कर्षो नास्ति जाघन्याः कर्षस्सन्तर्दनस्य तु ॥१९॥

भवेदाद्यप्रयोगाङ्गं प्रवृञ्जननिषेधनम् ।
स्यादुत्कर्षः पेषणस्य चरावेव भवेत्स तु ॥२०॥

यत्रान्यसहितः पूषा भवेत्तत्र न पेषणम् ।

## चतुर्थः पादः

अर्थवादो निवीतोक्तिः सर्वाङ्गं नोपवीतकम् ॥२१॥

उपव्ययत इत्येष क्रत्वर्थस्य विधिर्मतः ।
यज्ञोपवीती हीत्येतद्भवेच्चास्यानुवादकम् ॥२२॥

दर्भाणामुदगग्रत्वं स्मृतिप्राप्तमनूद्यते ।
विधिरेवोपरिधृतौ प्रतीचीमिति तु स्तुतिः ॥२३॥

तथा पदं तरेत्यादि क्रत्वर्थोऽनृतवर्जनम् ।
जञ्जभ्यमानमन्त्रः स्यात्पुंसः क्रतुमुपेयुषः ॥२४॥

पुरुषार्थतया बोध्यमवगोरणवर्जनम् ।
न संवदेत मलवद्वाससेत्यपि पूर्ववत् ॥२५॥

पुरुषार्था स्वर्णधृतिर्जयाः कर्माणि वैदिके ।
अश्वेष्टिर्वैदिके दाने न स्यादेषा प्रतिग्रहे ॥२६॥

प्रतिग्रहे निषेधार्थो वार्त्तिके नास्त्ययं नयः ।
वैधसोमवमाविष्टिः सा नर्त्विग्वमने भवेत् ॥२७॥

द्व्यवदानस्यैव यागे द्रव्यत्वमथ वार्त्तिके ।
कृत्स्ने हविषि यागार्थे प्रक्षेपो द्व्यवदानगः ॥२८॥

शेषकार्याणि सर्वेभ्य एकस्माद् यदि मुख्यतः ।
इदं ब्रह्मण इत्यादिनिर्देशो भक्षणार्थकः ॥२९॥

## पञ्चमः पादः

आज्येनोपांशुयाजार्थे शेषकार्यं विधीयते ।
न प्रस्थायीय कुम्भ्यां स्यान्नापि सौत्राम[1]णिग्रहे ॥३०॥

सर्वपृष्ठपुरोडाशे नावर्त्त्याः प्रतिपत्तयः ।
ऐन्द्रवायवशेषस्य द्विवारं भक्षणं भवेत् ॥३१॥

सोमे शेषस्य सद्भावाद्वचनाच्छेषभक्षणम् ।
होत्रादीनां भवेद्भक्षश्चमसेषु समाख्यया ॥३२॥

उद्गातृचमसं तस्य गणः सर्वोऽपि भक्षयेत् ।
मतं वार्त्तिककारस्य सुब्रह्मण्यं विनेति तु ॥३३॥

हा[2]र्योजनस्य लभते ग्रावस्तोतापि भक्षणम् ।
वषट्कारनिमित्तोऽपि भक्षः सोमेऽस्ति कश्चन ॥३४॥

---

१. मणी इति क पु० पा० ।

२. 'हरिरसि हारियोजनः' इति हि मन्त्रभागः । अनेन मन्त्रेण यस्य ग्रहस्य ग्रहणं भवति, सोऽपि हारियोजनशब्देन व्यपदिश्यते । अतः मूलभूतः शब्दस्तु 'हारियोजन' इति; तथापि छन्दोभङ्गभिया 'हार्योजन' इति शब्दस्योपादानमिति मन्ये ।

तथैवास्त्यपरो भक्षो होमाभिषवहेतुकः ।
उक्तानां भक्षहेतूनां समवाये समुच्चयः ॥३५॥

समवाये वषट्कर्त्तुः प्रथमं भक्षणं मतम् ।
अनुज्ञातैः सोमभक्षः कर्त्तव्यो वचनाद्भवेत् ॥३६॥

अनुज्ञानं च मन्त्रेण कर्त्तव्यं लिङ्गदर्शनात् ।
अनुज्ञानुज्ञापनयोर्मन्त्रौ व्युत्क्रमतो मतौ ॥३७॥

एकपात्रप्रसक्तानामेवानुज्ञानमिष्यते ।
याज्यायां यष्टुरस्त्येव स्याद् वषट्कृतिभक्षणम् ॥३८॥

स्तिभिन्यः साधनं यागे पिबेयुर्ब्राह्मणाः शतम् ।

## षष्ठः पादः

अनारभ्यविधानं यत्प्रकृतिं तत्प्रपद्यते ॥३९॥

विरुद्धं साप्तदश्यादि विकृतिं प्रतिपद्यते ।
काम्यं नित्यस्य बाधेन प्रकृताववतिष्ठते ॥४०॥

नाधानं पवमानेष्टेरङ्गमग्न्यर्थमेव तत् ।
पवमानेष्टिषु न ताः पशुधर्मास्तु दैक्षगाः ॥४१॥

परिव्याणद्वयस्यापि स धर्मा रशना समा ।
ग्रहधर्माः समाम्नाता भवन्त्यप्यंश्वदाभ्ययोः ॥४२॥

एवमेवेष्टकाधर्माश्चित्रिण्यादिषु सङ्गताः ।
स्तिभिनीनां न सोमेन स्यात्समानविधानता ॥४३॥

मुख्येन स्यात्प्रतिनिधेः पूतीकानां तथैव सा ।
स्वाश्रयक्रियया संस्था न समानविधानकाः ॥४४॥

## सप्तमः पादः

अङ्गप्रधानहविषां वेदिधर्मादयः समाः ।
प्रधानार्थाः पुनः केशश्मश्रुवापादयः समाः ॥४५॥

वेदिरङ्गप्रधानानां प्रचारे सौमिकी समा ।
अङ्गप्रधानहविषां मन्त्रौ तदभिमर्शनौ ॥४६॥

सोमे प्रधानमात्रार्था दीक्षा दक्षिणया सह ।
अन्तर्वेदी बहिर्वेदीत्यन्तरालस्य लक्षणा ॥४७॥

देशः स्यात्सामिधेन्यङ्गं हविर्धानेन लक्षितः ।
हविस्त्यागादितोऽन्यत्र कारणीया क्रियेतरैः ॥४८॥

होत्राद्यास्ते च भिद्यन्ते संज्ञावरणभेदतः ।
चमसाध्वर्यवस्तेभ्यो भिन्नाः स्युर्बहवस्तु ते ॥४९॥

दश ते शमिताध्वर्युपुरुषः स्यात्तु कश्चन ।
ऋत्विक्ष्वेवोपगातारस्तद्भिन्नः सोमविक्रयी ॥५०॥

वृत्तेषु ऋत्विजः केचिद् ब्रह्माद्यास्ते तु षोडश ।
स्वामि-सप्तदशास्ते स्युस्तेषां कार्यव्यवस्थया ॥५१॥

अग्नयस्तुल्यवद् यान्ति होमात्प्राकृतवैकृतान् ।
प्रैषानुवचने युक्ते मैत्रावरुणकर्तृके ॥५२॥

चमसानां न होतारश्चमसाध्वर्युसंज्ञिताः ।
श्येनादिषु स्युर्नानैव कर्त्तारः प्रकृताविव ॥५३॥

## अष्टमः पादः

परिक्रयो याजमानः श्मश्रुवापादयस्तथा ।
तद्वत्तयोर्हिरण्यमय्यो मालाः सर्वस्य चर्त्विजः ॥५४॥

सदो मानादिषु गुणैर्यष्टुरेव फलं भवेत् ।
यजमानेन वक्तव्या मन्त्राः स्युः प्रत्यगाशिषः ॥५५॥

द्वयाम्नातमन्त्रा वाजस्येत्यादयः स्युर्द्वयोरपि ।
क्लृप्तीर्वाचयतीत्यत्र भवेत् ज्ञस्यैव वाचनम् ॥५६॥

वत्सं चोपावसृजतीत्यादिरध्वर्युकर्त्तृकः ।
होतुराध्वर्यवं कार्यं विरोधेऽध्वर्युताजुषः ॥५७॥

प्रैषप्रैषार्थकर्त्तारौ विभिद्येते परस्परम् ।
तत्राध्वर्युः प्रैषकर्त्ता समाख्यानविरोधतः ॥५८॥

यजमानस्यैव भवेत्फलमध्वर्युमन्त्रगम् ।
मा मा सन्ताप्तमित्यादेर्ऋत्विग्गामित्वमिष्यते ॥५९॥

तन्नौ सहेत्यादिमन्त्र ऋत्विजोऽपि फलं भवेत् ।
सामान्यद्रव्यसंस्कारः सर्वप्रकृतकर्मणाम् ॥६०॥

यूपावटास्तरं बर्हिर्बर्हिधर्मान्न गच्छति ।
पवित्रार्थे विधृत्यर्थे बर्हिषी प्रकृतावपि ॥६१॥

सवनीयपुरोडाशाच्छकलस्य ग्रहे भवेत् ।
उपांशुत्वं प्रधानार्थं काम्यास्विष्टिषु चोदितम् ॥६२॥

श्येनाङ्गार्थं दृति नवनीतस्य ग्रहणं मतम् ।
अङ्गेषु तदिदं सुत्याकालेष्वेवेति नेष्यते ।
सवनीयपुरोडाशा एव स्युस्तरसात्मकाः ॥६३॥

॥ इति तृतीयोध्यायः ॥

---

## अथ चतुर्थोऽध्यायः

### प्रथमः पादः

अथ प्रयुक्त्यै क्रत्वर्थपुरुषार्थविचारणा ॥१॥

क्रत्वर्थपुरुषार्थौ तु क्रतु - पुम्प्रीतिसाधनौ ।
न विधेयं फलं च स्याद् रागादेव प्रवृत्तितः ॥२॥

गोदोहनं न क्रत्वर्थं न च द्रव्यस्य चार्जनम् ।
नापि नोद्यन्तमित्यन्यानुक्तिर्यज्ञायुधश्रुति ॥३॥

पश्वेकत्वं श्रुतं यज्ञे कारकत्वं प्रपद्यते ।
लिङ्गमप्यस्य च पशोः शब्दार्थत्वाद्विवक्षितम् ॥४॥

त्यागांशेनादृष्टमपि कुर्युः स्विष्टकृदादयः ।
प्रत्युक्त्यर्थोपरिग्रन्थे शेषत्वस्यविचारणा ॥५॥

वाजिनं न प्रयोक्तुः स्याद् दध्यानयनकर्मणः ।
नयनस्यैकहायन्या नाक्षस्याभ्यञ्जनक्रिया ॥६॥

नोपवापः कपालस्य न शकृल्लोहिते पशोः ।
स्विष्टकृत्करणीयः स्यादाग्नेयाद्युत्तरार्द्धतः ॥७॥

प्रतिपत्तिः प्रयाजाज्यावशेषस्याभिघारणम् ।
प्रयोक्तौपभृताज्यस्य बर्हिः प्रति समानयः ॥८॥

व्यवस्थया प्रयाजादीन् याज्यैः स्युर्जौहवादिभिः ।
अष्टावुपभृतीत्येषा चतुःसंख्याद्वये विधिः ॥९॥

## द्वितीयः पादः

स्वरुर्यूपानुनिष्पादी प्राचीमिति न दिग्वचः ।
मूलं शाखानुनिष्पादी शाखया सह प्रहृतौ ॥१०॥

प्रतिपत्तिर्निनयनं प्रणीतानामपां भवेत् ।
दण्डदानं प्रशस्तं यत्तद् दण्डस्य प्रयोजकम् ॥११॥

प्रासनं प्रतिपत्तिर्हि[1] विषाणायाः निगद्यते[2] ।
न भजन्त्यर्थकर्मत्वं सर्वाश्च प्रतिपत्तयः ॥१२॥

नयनं सोमलिप्तानां प्रतिपत्तिरितीष्यते ।
द्रव्यदेशादिषु विधिर्नियमात्मक इष्यते ॥१३॥

तद्वद्गुणोऽपि शुक्लादौ तथावहननादिषु ।
त्यागो द्रव्यस्य यागः स्याद्देवतोद्देशपूर्वकः ॥१४॥

स एव होम इत्युक्तः प्रक्षेपांशाधिको यदि ।
स्वीयस्य परकीयत्वापादनं दानमुच्यते ॥१५॥

लक्षणानीमानि भाष्ये प्रयोगप्रक्रियास्वपि ।
वार्त्तिके त्वश्रुते यागे सौर्यादौ यागकल्पना ॥१६॥

यजे[3]र्जुहोतेः श्रवणमुक्तं चेति नयद्वयम् ।
आतिथ्येष्टयुपसद्दीक्षाः स्युः साधारणबर्हिषः ॥१७॥

---

१. 'पत्तित्वं' इति मू० प्र० पा० ।

२. 'प्रपद्यते' इति मू० प्र० पा० ।

३. 'यागे जुहोती'ति मू० प्र० पा० ।

## तृतीयः पादः

अङ्गानां पर्णतादीनां फलं नास्त्यार्थवादिकम् ।
गोदोहनादेरन्यत्स्यान्नित्ये प्रणयनादिके ॥१८॥

दधिक्रतुफलार्थं स्यात्क्रत्वर्थं तु पयोव्रतम् ।
फलं विश्वजितः कल्प्यं तदेकं स्वर्ग एव सः ॥१९॥

रात्रिसत्रं प्रतिष्ठार्थं न सौर्ये स्वर्गकल्पना ।
सर्वेभ्यः स्यात्फलविधिस्तेषां पर्यायतो जनिः ॥२०॥

नामुष्मिकत्वनियमश्चित्रादीनां फलेषु च ।
अङ्गं बृहस्पतिसवो वाजपेयक्रतौ भवेत् ॥२१॥

दर्शेन वैमृधो नानुयाजाः सोमाग्निमारुते ।
इष्टयोर्न सोमः पुत्रस्य भवेद्वैश्वानरी फलम् ॥२२॥

प्राग्जातकर्मणो नैषा कर्त्तव्या न च सूतके ।
न वाजपेयकाले स्याद् बृहस्पतिसवक्रिया ॥१३॥

## चतुर्थः पादः

कर्मणां यागरूपाणां राजसूये प्रधानता ।
सर्वस्मिन् राजसूयेऽङ्गमभिषेकावधिः क्रिया ॥२४॥

तस्मिन् भवेन्न सौम्यस्य चरोरुपसदङ्गता ।
अङ्गमामनहोमा स्युर्नित्ये एव दधिग्रहः ॥२५॥

यो वै संवत्सरमिति क्रिया नैमित्तिकी भवेत् ।
तथा षष्ठी चितिर्दर्शे पितृयज्ञस्य नाङ्गता ॥२६॥

रशना सवनीयस्य यूपसंस्काररूपिणी ।
स्वरोः पश्वञ्जनार्थत्वान्नैव यूपार्थता मता ।।२७।।

प्राधान्यमिष्टयोर्यागानां षण्णां स्यात् कालयोगिनाम् ।
सोमयागस्यैव भवेज्ज्योतिष्टोमप्रधानता ।।२८।।

।। इति चतुर्थोऽध्यायः ।।

---

## अथ पञ्चमोऽध्यायः

### प्रथमः पादः

श्रुतिलक्षण एव स्यादर्थानां नियतः क्रमः ।
विशेषणतयार्थानां क्रमः स्वविधिमर्हति ॥१॥

क्त्वा श्रुत्या दीक्षयित्वेति क्रमश्चैव विधीयते ।
अग्निहोत्रयवाग्वादावर्थात्सिद्धया क्रमो[1] मतः ॥२॥

सर्वेषां क्रममानानामभावेऽनियतः क्रमः ।
पाठक्रमाद्विधीनां स्यात्समिद्यागादिषु क्रमः ॥३॥

प्राजापत्यपदार्थेषु सः प्रवृत्तिक्रमाद् भवेत् ।
साद्यस्क्रे सवनीयस्य स्थानेन प्रथमं क्रिया ॥४॥

सारस्वते पदार्थानां भवेन्मुख्यक्रमात्क्रमः ।
क्रमो मुख्यक्रमात् पाठगोचरो बलवान् मतः ॥५॥

विधिपाठक्रमादेव मन्त्रपाठक्रमो बली ।
वैकृतद्रव्यधर्माणां चोदकाधिगतः क्रमः ॥६॥

प्रातर्मध्यन्दिने सायमेकस्यैवाह्न इष्टयः ।
स्यातामुत्कर्षापकर्षौ तादादिकतदन्तयोः ॥७॥

सवनीयाः सौमिकेभ्यः प्रास्य निर्वापबोधिताः ।
यूपकर्मापकर्षे स्यान्न प्राचामपकर्षणम् ॥८॥

---

१. क्रयो इति क० पु० पा० ।

अनुयाजोत्कर्षणेऽपि नोत्कृष्यौ दक्षिणाग्निकौ ।
दर्शेऽवेष्टयपकर्षेऽपि न प्राचामपकर्षणम् ॥९॥

उत्कर्षो नाग्निहोत्रस्य भवेत् सान्तपनीयया ।
उक्थ्येन स्यात् षोडशिन उत्कर्षस्तत्परा क्रिया ॥१०॥

## द्वितीयः पादः

स्यात्पदार्थानुसमयः प्राजापत्यपशुव्रजे ।
सहस्राद्यश्वदाने च काण्डानुसमयो भवेत् ॥११॥

एकैकेनानुसमयो मुष्ट्यादिषु न युज्यते ।
अवदानं प्रदानान्तमापरिव्याणमञ्जनम् ॥१२॥

प्राजापत्यावदानानां न काण्डोऽनुसमीयत ।
नानाबीजेषु मुसलोलूखलं नैव भिद्यते ॥१३॥

पृषदाज्ये पात्रभेदः स्यादन्ते वैकृताहुतिः ।
देवनाद्यपकर्षः स्यादभिषेकापकर्षणे ॥१४॥

पूर्वं सावित्रहोमादि दीक्षणीयेष्टितो भवेत् ।
स्याद् रुक्मप्रतिमोकादि पश्चाद्दीक्षितसंस्कृतेः ॥१५॥

## तृतीयः पादः

प्रयाजैकादशत्वादि सर्वसम्पाद्यमिष्यते ।
स्वस्वस्थानविविवृद्ध्यै वषट्त्वाद्युपसदां भवेत् ॥१६॥

सामिधेनीष्वधाय्यानामन्त एव निवेशनम् ।
स्तोमवृद्धौ तथागन्तोरन्त एव निवेशनम् ॥१७॥

साम्नामागम्यमानानां गायत्र्यादिषु वेशनम् ।
औपानुवाक्य' कृत्वग्निशेषोंऽश्वादिग्रहेष्टकम् ॥१८॥

इष्टकामध्यमचितौ प्रत्यक्षब्राह्मणोदिताः ।
पूर्वं लोकम्पृणायाः स्युर्मध्यमायामपि त्विमाः ॥१९॥

अग्निहोत्रादिकर्माणि पवमानेष्टयनन्तरम् ।
अग्निव्रतानि कृत्वन्ते इष्टयन्ते दीक्षितव्रतम् ॥२०॥

काम्यनैमित्तिकेष्टानां न पाठक्रमतः क्रमः ।
अग्निष्टोमस्य निर्द्देशो य एतेनेत्यसौ मतः ॥२१॥

संस्थान्तरगवादीनामथान्येनेत्ययं समः ।
न चायमेकस्तोमानां निर्देशः सर्वशो यतः ॥२२॥

## चतुर्थः पादः

पाठश्रुतेरर्थतश्च दुर्बलः क्रमसाधने ।
प्रवृत्तिक्रमतो मुख्यक्रमस्तु बलवान् भवेत् ॥२३॥

आधानस्येष्टिपूर्वत्वं सोमपूर्वत्वमप्युभौ ।
ब्राह्मणस्याप्युभौ कल्पौ हविरेकं हि कृष्यते ॥२४॥

कृत्वाद्यनादरवचः सोमार्थं परिगृह्यते ।
ब्राह्मणस्य प्ररोडाशमात्रमुत्कर्षमिच्छति ॥२५॥

सद्यो विकृतयः सोमादूर्ध्वं सान्नाय्यविक्रियाः ।
तथा सोमविकाराणामूर्ध्वमिष्ट्योरनुष्ठितिः ॥२६॥

॥ इति पञ्चमोऽध्यायः ॥

---

## अथ षष्ठोऽध्यायः

### प्रथमः पादः

सम्बध्यन्ते फलत्वेन स्वर्गाद्याः कामनान्विताः ।
मूकदेवतिरश्चां तु नास्ति कर्मस्वधिक्रिया ॥१॥

स्त्रीपुंसयोरधिकृतिः सहैव स्यात्तयोस्तु सा ।
क्षौमे वसानौ स्त्रीपुंसौ यावदुक्तादिकं क्रियाः ॥२॥

त्रयाणामेव वर्णानां भवेद् यागेष्वधिक्रिया ।
अधिकारी भवेद् द्रव्यहीनस्तत्समुपार्जनात् ॥३॥

अङ्गहीनोऽपि तस्यैव समाधानेऽधिकारवान् ।
यस्याः प्रतिसमाधेयं तत्र तस्यास्त्यधिक्रिया ॥४॥

स्याद्वा नम न्यार्षेयस्य रथकारो न यौगिकः ।
निषाद एव स्थपतिश्चरौ रौद्रेऽधिकारवान् ॥५॥

### द्वितीयः पादः

सत्राधिकारिणां कृत्स्नमेकैकस्य फलं भवेत् ।
एकोऽधिकारी दर्शादौ समाप्यारम्भयुक् क्रिया ॥६॥

गेहादि न समाप्यं स्यात् फलेच्छापगमे सति ।
भक्षणं लशुनादीनां फलाय न निषिध्यते ॥७॥

आरभ्यैवोपनयनादभिवादादयः स्मृताः ।
अग्निहोत्रादिकं कार्यं प्रदोषादिषु जीवता ॥८॥

तच्च प्रतिप्रदोषादि कालमावर्त्तते सदा ।
आवर्त्तते निमित्तेषु स्कन्नहोमादिकं तथा ॥९॥

अभिवादाद्यपि तथैवावर्त्तेत निमित्ततः ।
सोमविद्याप्रजं नित्यं तत्त्रयाणामपीति च ॥१०॥

## तृतीयः पादः

नित्यं कार्यं यथाशक्ति काम्यं सगुणमेव तु ।
द्रव्यभेदेऽपि यागादिक्रिया नैव विभिद्यते ॥११॥

मुख्याभावे प्रतिनिधिर्देवतादिषु नास्त्यसौ ।
माषाद्या न प्रतिनिधिस्थानमर्हन्त्ययज्ञियाः ॥१२॥

न स्वामिनः प्रतिनिधिः सत्रे तस्याप्यसौ भवेत् ।
न स्वामी कर्मकारित्वात् स्वामिधर्मा तथाप्यसौ ॥१३॥

सदृक् प्रतिनिधातव्यं सति कल्पान्तरेऽपि तत् ।
पूतीकेषु विधिः सोमसदृक्षु नियमात्मकः ॥१४॥

प्रतिनिध्यपचारश्चेन्मुख्यस्यैव सदृङ् मतम् ।
प्रतिनिध्यर्थिना मुख्ये लब्धे तस्यैव संग्रहः ॥१५॥

अमुख्ये संस्कृते मुख्ये लब्धेऽपि स्यादयं नयः ।
नियुक्ते तु पशौ तस्मिन्न पुनर्मुख्यसंग्रहः ॥१६॥

द्रव्यसंस्कारयोर्द्रव्यमर्थोऽर्थद्रव्ययोर्बली ।
व्रीहीणां न प्रतिनिधिः पर्याप्तौ ह्यवदानयोः ॥१७॥

## चतुर्थः पादः

अवत्तनाशे होमार्थं पुरोडाशान्तरं भवेत् ।
न्यायेनैवं वचनतस्त्वाज्येनैव समापनम् ॥१८॥

इडाद्यर्थावत्तनाशे तत्तद्भक्षस्य लोपनम् ।
कर्मप्रविष्टैः कर्त्तव्यमिडादोषादिभक्षणम् ॥१९॥

भिन्ने जुहोतीत्यादि स्यात् कृत्स्नावयवभेदयोः ।
क्षामे निमित्ते यत्कृत्स्नक्षायतावेव तद्भवेत् ॥२०॥

हविरार्त्तिनिमित्तं यदेकार्त्तावपि तन्मतम् ।
द्वाभ्यां भवति होमाभिषवाभ्यां सोमभक्षणम् ॥२१॥

द्वयोरार्त्योरनुगतौ पुनराधेयमिष्यते ।
ऐन्द्रं कर्मान्तरं दर्शाद्दर्शं प्रत्यामनेन्न तत् ॥२२॥

सत्रायागूर्याप्रवृत्तौ विश्वजिद् याग इष्यते ।
व्रते कालविधिर्वत्सैः स्यादसन्नयतोऽपि सः ॥२३॥

कालार्थ एव संयोगः प्रस्तरे शाखया त्विति ।

## पञ्चमः पादः

विधिरभ्युदये पूर्वं देवतापनये मतः ॥२४॥

लुप्तस्तत्रोपांशुयाजो देवतापनयाद् भवेत् ।
अनिरुप्ते निरुप्ते च प्रायश्चित्तमिदं समम् ॥२५॥

निर्वापो वैकृतीभ्यः स्यादनिरुप्ते यदोदयः ।
किञ्चन्निरुप्ते शिष्टस्य तूष्णीं निर्वाप इष्यते ॥२६॥

स्यादसन्नयतोऽप्येषा प्रायश्चित्तिर्निमित्ततः ।
अक्रीतराजकस्यापि सत्रोत्थानेऽस्ति विश्वजित् ॥२७॥

द्वादश प्रकृतौ दीक्षाः श्रुतकल्पत्रयं तु वा ।
द्वादशाहे द्वादशत्वं दीक्षाणां नियतं तु वै ॥२८॥

गव्यदीक्षाकालविधौ भवेन्माघ्येव पूर्णिमा ।
उत्कर्षेऽवभृथस्य स्युर्नाग्निहोत्रादिकाः क्रियाः ॥२९॥

न तत्र प्रतिहोमाः स्युः कर्त्तव्याकरणे हिते ।
तथैवावभृथादूर्ध्वमिष्ट्युत्कर्षेऽपि नैव ते ॥३०॥

भवेयुः प्रतिहोमा यद्यतिपत्तिक्रमेण ते ।
भिन्ने प्रकृत एव स्याज्जुहोतिस्तन्निमित्तकः ॥३१॥

व्यापन्नमित्यभोज्यं स्यात् केशकीटादिदूषितम् ।
प्रायश्चित्तमपच्छेदयौगपद्येऽपि विद्यते ॥३२॥

तत्र द्वयोर्विकल्पः स्यात् पौर्वापर्ये परं बली ।
पश्चादुद्गात्रपच्छेदे सर्वस्वं स्यात्पुनः क्रतौ ॥३३॥

आवृत्तिरह्नस्तस्यैवापच्छेदोऽहर्गणे यदि ।

## षष्ठः पादः

सत्रेषु भिन्नकल्पानामधिकारो न विद्यते ॥३४॥

पुरोहितश्च राजा वाधिकृतौ द्वन्द्वतः सह ।
सत्रेषु ब्राह्मणा एव भवेयुरधिकारिणः ॥३५॥

तत्रापि वैश्वामित्राः स्युः समकल्पैः सहेतरैः ।
तत्रापि साग्निकास्तेषां पात्रं साधारणं मतम् ॥३६॥

त्रयोऽप्यध्वरकल्पादौ वर्णाः स्युरधिकारिणः ।

## सप्तमः पादः

स्वदाने देयमात्मीयं न भूमिर्न तुरङ्गमः ॥३७॥

नासत्सम्पाद्य दातव्यं न शुश्रूषुश्च शूद्रकः ।
यावत्स्याद्दक्षिणाकाले दातव्यं तावदेव हि ॥३८॥

भृत्यर्थं सकलं देयं क्रतुभुक्त्यर्थवर्जितम् ।
सर्ववेदसमेव स्यादहीने विश्वजित्यपि ॥३९॥

सर्ववेदसमिष्टं यदधिकं द्वादशाच्छतात् ।
धृतिभेदो परिमितं तच्च पूर्वाधिकं भवेत् ॥४०॥

स्तुतिः स्यात्परकृत्यादौ तत्तद्गोत्रस्य कीर्त्तनम् ।
भवेद्वैश्वसृजे सत्रे सम्वत्सरपदं दिने ॥४१॥

## अष्टमः पादः

न संस्कृते चतुर्होता तथा नोपनयाहुतिः ।
नैवात्र स्थपतीष्टिः स्यान्नावकीर्णी पशुस्तथा ॥४२॥

कर्माण्युपनयादीनि स्मार्त्तोदगयनादिके ।
इतरत्र तु पित्र्याणि कार्याणि स्मृतिचोदिते ॥४३॥

सत्त्वेऽपि याच्ञा क्रयणं पयोव्रतमुखानि च ।
न कालान्नियमो जीर्णे पशुः छागो हि मन्त्रतः ॥४५॥

॥ इति षष्ठोऽध्यायः ॥

---

## अथ सप्तमोऽध्यायः

### प्रथमः पादः

व्यवस्थातोऽतिदेशोऽस्ति श्येनाङ्गानामिषावसौ ।
पश्व सश्वरणेऽयं स्यात्स विधिः स्तुतिगोचरः ॥१॥

ऐन्द्राग्नैककपालस्थोऽप्येवमेव भवेदसौ ।
तत्र प्राघासिकाङ्गानां प्रदेशो वैश्वकर्मणे ॥२॥

### द्वितीयः पादः

रथन्तरादिसंज्ञत्वात्प्रदेशो गीतिगोचरः ।

### तृतीयः पादः

अग्निहोत्रेऽतिदेशः स्यात्प्रायणीये न यौगिके ॥३॥

विश्वजित्सर्वपृष्ठोऽस्ति प्रघासावभृथे तथा ।
तत्र द्रव्यं तुषादिस्यात्प्रदेशो नास्ति वैष्णवे ॥४॥

न निर्मन्थ्याज्यबर्हिष्वप्यतिदेशो गुणे विधेः ।
प्राकृतं स्यात्प्रणयनं तत्तु मध्यमयोर्भवेत् ॥५॥

अन्ये त्वपूर्वं तयोरित्येकाधिकरणं मतम् ।
धर्माप्तिः स्वरसामैककपालादिषु लिङ्गतः ॥६॥

वासोनसी क्रमादाप्तिराज्यदोहाग्न्यसंस्कृतिः ।
न यूपकर्मोपशये नाग्नौ पृष्ठाः सधर्मकाः ॥७॥

## चतुर्थः पादः

सौर्यादावस्ति धर्माप्तिर्वैदिकी सा सदृक्त्वतः ।
गावामयनिकाज्ज्योतिराद्या एकाहधर्मकाः ॥८॥

॥ इति सप्तमोऽध्यायः ॥

# अथाष्टमोऽध्याय:

## प्रथमः पादः

एकस्मादेव धर्माणामतिदेशो व्यवस्थया ।
यत्र यद्धर्मलिङ्गं स्यात्तत्र तद्धर्मसङ्क्रमः ॥१॥

अपूर्वः सोम इष्टीनां प्रकृतिर्दर्शपूर्णिमे ।
दैक्षस्यापि पशोः सैव पशूनां दैक्ष इष्यते ॥२॥

सौत्य एकादशिन्याः स्याद्गणानां सा पुनर्भवेत् ।
अव्यक्तचोदनानान्तु सोमः प्रकृतिरिष्यते ॥३॥

द्वादशाहोऽहर्गणानां गव्यं स्यादयनस्पृशाम् ।
उत्तरेषामादिमः स्यात्साद्यस्क्रादिनिकायिषु ॥४॥

फलादीनां विकृतिषु न भवेदतिदेशनम् ।
तथैव गुणकामानामपि नास्त्यतिदेशनम् ॥५॥

न सौर्यादिषु होत्रोः स्यात् व्यवस्था पर्वभेदतः ।
आग्नेयो दैवतैक्येन सौर्यप्रकृतिरिष्यते ॥६॥

आग्नेयपयसोर्द्रव्यसाम्यात्सान्नाय्यधर्मता ।
कृष्णलेष्वौषधा धर्मा आज्यधर्मा मधूदके ॥७॥

## द्वितीयः पादः

सुरावाजिनयोरिष्टिः सान्नाय्यप्रकृतिः पशोः ।

तत्रापि श्रुतमामिक्षा श्रुतैकप्रकृतिर्मता ॥८॥

अहीनसत्रप्रकृतिर्द्वादशाहो व्यवस्थया ।
स पञ्चदशरात्रन्तु सत्रं स्यात्कौण्डपायिनाम् ॥६॥

## तृतीयः पादः

हविर्भेदे देवतायाः साम्येन प्रकृतिस्थितिः ।
सप्तरात्रे तु नानान्हां प्रवृत्तिः सङ्घसाम्यतः ॥१०॥

षडहावृत्तिरेव स्याच्चत्वारः षडहा इति ।
संस्थागणशतोक्थ्यादेर्धर्माः स्युर्द्वादशाहिकाः ॥११॥

शतोक्थ्यादिगतोक्थ्यादावेकाहाद्धर्मसङ्क्रमः ।
ग्राह्या उत्पत्तिगायत्र्यो बृहस्पतिसवे मताः ॥१२॥

## चतुर्थः पादः

दर्विहोमाः कर्मनाम वैदिकानामपीष्यते ।
जुहोतिचोदनानां स्यादपूर्वा एव ते मताः ॥१३॥

॥ इत्यष्टमोऽध्यायः ॥

## अथ नवमोऽध्यायः

### प्रथमः पादः

प्रमोक्तृपूर्वं धर्माणां स्याच्चैतत्सन्निपातिनाम् ।
निमित्तं चापि तेषां तदित्येवं वर्णकत्रयम् ॥१॥

प्रोक्षणं पिंषिहन्तिभ्यां सोमापूर्वैश्च वाग्यमः ।
देवताफलसम्बन्धस्ताभ्यां नैव प्रयुज्यते ॥२॥

न देवतातिथिन्यायाद् यज्ञे प्राधान्यमश्नुते ।
व्रीह्याद्यैर्न प्रयुज्यन्ते प्रोक्षणप्रमुखान्यपि ॥३॥

सोमोद्भवेनापूर्वेण नोपांशुत्वं प्रयुज्यते ।
प्रणीता वाग्यमोऽप्येवं नैष्ठिके न प्रयुज्यते ॥४॥

प्रतीष्टकं नाग्निधर्मः पत्न्यन्तत्वे विनोत्तमम् ।
अभ्यासः सामिधेनीनां स्थानधर्मत्वमृच्छति ॥५॥

आरम्भणीयानावृत्ताविष्टयोरावृत्तिमश्नुते ।
न निर्वापे सवित्रश्विपूष्णामूहः प्रवर्त्तते ॥६॥

तस्मिन्नग्निपदं तूह्यं समवेताभिधानतः ।
तथा मांसपुराडाशे चोह्यं धान्यपदं भवेत् ॥७॥

इडामन्त्रे यज्ञपतेर्नोहः सत्रेषु विद्यते ।
विद्यते यजमानस्य सूक्तवाके फलित्वतः ॥८॥

आग्नेयपशुब्रह्मण्या नोह्या हरिवदादयः ।
न तस्यै श्रृतमित्यादिर्वत्से चोहः प्रपद्यते ॥९॥

पशुसामानविध्यं चेन्मेष्यां लुप्तो मनुर्भवेत्
नियतः स्यादिराशब्दः प्रगीतः स प्रयुज्यते ॥१०॥

## द्वितीयः पादः

गीतयः सामशब्दोक्ताः स्यादूहश्च सकर्तृकः ।
सामसंस्कारकर्म स्यात्तद् भवेत्प्रत्यृचं तृचम् ॥११॥

प्रगेयं तत्समास्वेव रूढमुत्तरयोरिति ।
त्रैशोकं विषमत्वेऽपि बृहत्योर्भवतीति च ॥१२॥

बृहद्रथन्तरे गेये प्रगाथककुभोर्मते ।
प्रगाथिकबृहत्योश्च स्याद् यौधाजयरौरवम् ॥१३॥

प्रगाथिकानुष्टुभोश्च श्यावाश्वान्धी गवे मते ।
द्वयोर्द्वयोः प्रगथनात् तृचत्वं बार्हतेषु च ॥१४॥

गीतिभेदा विकल्पेरन्न ऋक्सामे उभे स्मृते ।
प्रगीतया चोपस्थानं तानश्च ऋतुषु स्मृतः ॥१५॥

साम्नां स्यादुत्तरासूह आयीभावविकारतः ।
स्तोभा अप्यतिदिश्येरन्विवर्णमधिकं तु ते ॥१६॥

व्रीह्यादिस्थानमापान्नाः स्युर्नीवार नखादयः ।
परिधौ यूपधर्माप्तिः स्यान्नियोजनसाधने ॥१७॥

श्रृतदध्नोरभ्युदये प्रणीताकार्यमिष्यते ।
रथन्तरबृहद्धर्मा यथाशब्दं व्यवस्थिताः ॥१८॥

कण्वे समुचितास्ते वा सम्वादेन व्यवस्थिताः ।
गोसवे तु व्यवस्थैव धर्माणां सामगत्वतः ॥१९॥

विकृतावतिदेशोऽस्ति नैव पार्वणहोमयोः ।
विभज्यैव प्रयोक्तव्यौ पर्वणोस्तौ यथायथम् ॥२०॥

समिदाद्याः प्रयाजास्तु स्युरारादुपकारकाः ।

## तृतीयः पादः

द्रव्यदेवत्वमूह्यं स्यात्तथा द्रव्यविशेषणम् ॥२१॥

यूपस्य लौकिके स्पर्शे प्रायश्चित्तमुदीरितम् ।
द्वावप्यूह्यौ द्विपशुके प्रयोगे पाशमन्त्रके ॥२२॥

पाशानित्येष मन्त्रोऽपि निवेशं प्रकृतौ भजेत् ।
प्रकृतौ पत्न्यनेकत्वे पत्नीमित्यस्य नोह्यता ॥२३॥

विकृतौ तदनेकत्वेऽप्यूह्यतास्य न विद्यते ।
तथोक्थ्यादेरैकविध्ये प्रास्मा इत्यस्य नोह्यता ॥२४॥

व्रीहेः प्रतिनिधावूहो नीवारादौ न विद्यते ।
नोह्याः स्युः पश्वनेकत्वे संसर्गिद्रव्यवाचकाः ॥२५॥

तत्र त्वभ्यसितव्यत्वमेकधेति पदं व्रजेत् ।
देवताद्वयमेव स्यात्पशौ मेधपतिद्वयम् ॥२६॥

तत्रैकवचनान्तस्य नास्त्यूहो बहुदैवते ।
देवतारूपभेदे तु तत्राप्यूहः प्रवर्त्तते ॥२७॥

## चतुर्थः पादः

वङ्क्रीणां पश्वनेकत्वे समस्य वचनं मतम् ।
प्राकृतेऽश्वादिवङ्क्रीणां समस्यैव वचो भवेत् ॥२८॥

न्यायद्वयं वक्ष्यमाणं टुप्टीकायामुदीरितम् ।
निषिद्धोऽपि चतुस्त्रिंशन्मन्त्रः पक्षे प्रवर्त्तते ॥२९॥

प्राकृतस्यापि करणं समस्तप्रतिषेधतः ।
उरूकेति वपायां स्यात्प्रशंसेति प्रशस्तयोः ॥३०॥

श्येनमित्यादिकं तत्र कार्त्स्न्यस्य प्रतिपादकम् ।
दर्शार्थेनाग्निहोत्रस्य कालोद्वानिनिमित्तकम् ॥३१॥

तद्वद्गतश्रियो धार्यो न दर्शादुद्धृतौ मनुः ।
प्रदेयधर्मः पयसि श्रपणार्थे न विद्यते ॥३२॥

कर्त्तव्योऽभ्युदये स स्यात्पशुकामेष्टिगो न सः ।
मिश्रणे द्वयकादीनां सोमधर्मो न विद्यते ॥३३॥

अश्वमेधपशूत्सर्गे तदन्ताङ्गतते विधिः ।
आज्येन शेषमित्येष यागान्तरविधिर्भवेत् ॥३४॥

॥ इति नवमोऽध्यायः ॥

---

## अथ दशमोऽध्यायः

### प्रथमः पादः

अतिदेशः पदार्थानामुपकारमुखो मतः ।
कृष्णले नावघातश्च विष्णोरावाहनं न च ॥१॥

आरम्भणीया नाङ्गेषु दीक्षणीयादिकादिषु ।
नानुमत्यादिषु तथा नापि स्वस्यां प्रवर्त्तते ॥२॥

यूपाहुतिः खलेवाल्यां नास्ति स्थाण्वाहुतिस्तथा ।
प्रयाजो यक्ष्यमाणानां भवेत्संस्कृतिरुत्तमः ॥३॥

नाज्यभागौ पशुगतः पुरोडाशश्च संस्कृतिः ।
चरुरोदनभेदः स्यात्स्थाल्यामेव स पच्यते ॥४॥

तस्मिन्नेषः संवपनं संवापः स्थापनं तथा ।
उपधानं सप्रथनं श्लक्ष्णीकरणभावना ॥५॥

अध्यूहनं प्रज्वलनं विहृत्यासादनं तथा ।
कर्त्तव्यत्वं न च भजेत्प्रयोजनविलोपतः ॥६॥

### द्वितीयः पादः

श्रुतत्वात्कृष्णले पाको नास्त्युपस्तरणादिकम् ।
श्रुतेर्भक्षणमप्यस्ति भक्षोपहूतयः सह ॥७॥

ब्रह्मेतरेषां नो भक्षा भक्षास्तस्यापि कालतः ।
चतुर्धा कृतिनिर्देशमपि तत्र न विद्यते ॥८॥

ऋत्विग्दानं भृतिस्तेषां न हविः शेषभक्षणम् ।
तेषां न सत्रे वरणं नापि स्यात्तत्र दक्षिणा ॥९॥

शमनीयो न सत्राङ्गं तत्कुर्युः सत्रिणः पृथक् ।
संहत्यकरणेऽपि स्युस्तदन्ये तत्र ऋत्विजः ॥१०॥

गवादिदानं कामेष्टावदृष्टैकप्रयोजनम् ।
द्वेष्याय दानमप्येवमस्थियागस्तु जीवताम् ॥११॥

लुप्यते जपसंस्कारो मृतस्यैष भवेद् यदि ।
कर्त्तव्यमेव तत्रापि शुक्रान्वारम्भणादिकम् ॥१२॥

गुणकामास्तत्र न स्युः सदोमानादिसंश्रयाः।
आयुराशास्त इत्याद्या न च स्युर्होतृकामनाः ॥१३॥

सर्वस्वारः समाप्यः स्यान्मृते कर्मास्थियज्ञवत् ।
आयुराशास्त इत्यादिस्तत्र स्याद् यावदाभंवम् ॥१४॥

ऋतुयाज्यावृत्तिः सत्रेऽप्यदृष्टार्थत्वतो भवेत् ।
निर्वापः पवमानेष्टौ गुणलोपान्न लुप्यते ॥१५॥

संख्यामुष्टिविरोधे स्यान्निर्वापे मुष्टिलोपनम् ।
गोरसाधारणैर्धेनुत्वाद्यैश्छागो निवर्त्तते ॥१६॥

साधारणैस्तु श्वेतादिगुणैर्नासौ निवर्त्तते ।
निर्वृत्ति खदिरत्वादि खलेवाल्यादिषु व्रजेत् ॥१७॥

तस्यां न स्युः छेदनाद्याः स्युस्तु पर्यूहणादयः ।
प्राकृतक्रमभेदेऽपि न पदार्थो निवर्त्तते ॥१८॥

न प्राकृतक्रमान्यत्वात्पदार्थो प्रकृते भवेत् ।

## तृतीयः पादः

एकादशप्रयाजादौ गुणमात्रविधिर्मतः ।।१९।।

हिरण्यगर्भमन्त्रः स्यादुत्तराघारसंश्रयः ।।
उत्करादेर्गुणस्यैव विधिरासादनादिके ।।२०।।

अग्नौ दीक्षाहुतीनां च प्राकृतैः स्यात्समुच्चयः ।
प्राकृत्या न समुच्चेया पुनराधेयदक्षिणा ।।२१।।

अन्वाहार्यस्याग्रयणे वासो वत्सं निवर्त्तकम् ।
तदन्वाहार्यधर्मः स्याद् वत्से पाको निवर्त्तते ।।२२।।

नापि वाससि पाकः स्यान्न तयोरभिधारणम् ।
द्वादशं शतमित्येषा संख्या गोमात्रसंश्रया ।।२३।।

विभज्य दक्षिणा देया विभागः स्यात्समाख्यया ।
सर्वस्या दक्षिणायाः स्याद् भुवि धेनुनिर्वर्त्तिका ।।२४।।

एका पञ्चगवामेव कृत्स्नस्यापि त्रिवत्सकम् ।
प्राकाशदानमध्वर्युभागस्यैव निवर्त्तकम् ।।२५।।

श्या[1]वाश्वः सकलस्यापि स्यात्सोमचमसस्तथा ।
वाकचैक्ये तु ब्रह्मभागमात्रस्यैव निवर्त्तकः ।।२६।।

यजुर्युक्तस्तु नाध्वर्युभागस्य विनिवर्त्तकः ।

---

१. श्यावो इति क पुं. पा. ।

## चतुर्थः पादः

नक्षत्रेष्टुच्चुपहोमाद्या न नारिष्ठादिबाधकः ॥२७॥

कुशकार्ये विधानाच्च तेषां स्युर्बाधकाः शराः ।
स्याद्रथस्य तु घोषस्तु बाधको मन्त्रदर्भयोः ॥२८॥

बार्हस्पत्यादिभिर्नैव बाध्यन्ते प्राकृता ग्रहाः ।
प्राजापत्यैर्न दैक्षाद्या नानुयाजास्तथामनैः ॥२९॥

पत्नीभिर्नोपगा गुग्गुल्वाद्यैर्न नवनीतकम् ।
तार्येन नाहतं न श्लोकाद्यैर्गायत्रमुख्यकम् ॥३०॥

कौत्सकाण्वजनित्रादिसामभिर्बाध्यते तु तत् ।
तदुद्वापं तानि कुर्युः स्वस्वसंख्यानुसारतः ॥३१॥

आवापो राजसामादेरुभयं पवमानगम् ।
विधिस्थमग्न्यादिपदं नियतं निगमेष्वपि ॥३२॥

विधिस्थपदमेव स्यात्सौर्यादिविकृतिष्वपि ।
अग्निः पावक इत्यादौ सगुणं तेषु तद्भवेत् ॥३३॥

गुणो बुधन्वत्त्वादिः स्यान्नाधानेष्ट्याज्यभागयोः ।
अनुबन्ध्यावनस्पत्यौ स्यातामुस्नावनस्पती ॥३४॥

स्यातामवभृथावग्नीवरुणौ स्विष्टकृद् गुणौ ।
छिद्राभिधान्यां सर्वेष्वप्यगुणः स्विष्टकृद्भवेत् ॥३५॥

अनुयाजः स्विष्टकृतस्तृतीयः संस्कृतिर्मतः ।
याज्यानुवाक्यावचनं न भजेदर्थकर्मताम् '॥३६॥

ऊहो मनोतामन्त्रस्य वायव्यादौ न विद्यते ।
स्वयोनावेव गेयं स्यात्साम कण्वरथन्तरम् ॥३७॥

गानमुत्तरयोस्तस्य स्वयोन्युत्तरयोर्भवेत् ।
ग्रहान्यत्वे न विकृतिर्नैव स्यात्स्तोत्रशस्त्रयोः ॥३८॥

ऊह आज्यपशब्दस्य पृषदाज्ये न विद्यते ।

**पञ्चमः पादः**

आदितः स्यादुपादानं त्रिकपालादिषु क्रमात् ॥३९॥

एकत्रिकक्रतोर्माध्यन्दिन आद्ये तृचे मतः ।
तस्मिन्धूर्गानमभ्याससम्पाद्यं तृचसंश्रयम् ॥४०॥

दशरात्रोऽहर्गणेषु मध्यमः सम्प्रवर्त्तते ।
नाद्योपादाननियमो मन्त्रेष्वाधूननादिषु ॥४१॥

स्तोमागमेन संख्यायाः पूरणं स्तोमवृद्धिषु ।
भवेदेतस्य तु बहिष्पवमाने ऋगागमः ॥४२॥

आग्नेयीनामागमः स्यात्सामिधेनीविवृद्धिषु ।
षोडशी प्रकृतावेव स्याद्राजन्यनिमित्तकः ॥४३॥

तद् ग्रहः स्यादाग्रयणात्तृतीयसवने तु सः ।
स राजन्यनिमित्तोऽपि भवेत्स स्तुतशस्त्रकः ॥४४॥

सकलानां द्विरात्राणामुत्तरेऽहन्यं मतः ।
अहीनस्य चतुर्थेऽहन्येकत्रैव भवेदसौ ॥४५॥

उत्कृष्टव्या विषुवति त्वहन्याग्रयणाग्रता ।
जगत्यां साम यच्च स्याज्जगत्साम तदुच्यते ॥४६॥

उपाग्रवत्योरग्रयत्वं संसवादिषु नो भवेत् ।
ग्राह्यः स्वस्थान एवैन्द्रवायवः पाठलम्बिते ॥४७॥

गुणकामाधिकारेऽपि ग्राह्यः स्वस्थान एव सः ।
शुक्रामन्थिग्रहादेस्तु विधौ स्यात्प्रतिकर्षणम् ॥४८॥

तदैन्द्रवायवात्पूर्वं कृष्यते सादनं तथा ।
ग्रहसादनकर्षेपि प्रदानं नैव कृष्यते ॥४९॥

त्र्यनीकायामादितोऽन्होर्रनिमित्तोऽग्रता विधिः ।
व्यूढो विकारोऽनीकानां गव्ये स्वस्थानवृद्धयः ॥५०॥

छन्दो व्यतिक्रमो व्यूढे मन्त्रैकविषयो मतः ।

**षष्ठः पादः**

बृहद्रथन्तरादीनां गानं कार्यं तृचे मतम् ॥५१॥

कालार्थ एव संयोगे वीक्षणस्वदृंशोर्भवेत् ।
गव्यादिपृष्ठ्यषडहेनान्वहं पृष्ठसामनी ॥५२॥

द्वादशाहैकादशिन्यां विभज्यालम्भ इष्यते ।
न पृष्ठानां विश्वजिति पृष्ठस्तोत्रे निवेशनम् ॥५३॥

वैरूप सामेत्यादौ स्यात्पृष्ठ एव निवेशनम् ।
त्रिवृदग्निष्टुदित्यादौ स्तोत्रीया नवके त्रिवृत् ॥५४॥

सामद्वयं संसवादौ पृष्ठस्तोत्रस्य साधनम् ।
षडहप्रातिलोम्येऽपि तदन्ते मधुभोजनम् ॥५५॥

आवृत्तिः षडहावृत्तौ न मध्वाशस्य युज्यते ।
व्यपेतषडहावृत्तौ तस्याप्यावृत्तिरापतेत् ॥५६॥

सत्रेऽपि स्यान्मध्वशनं मानसं नाहरन्तरम् ।
सत्राणि बहवः कुर्युस्त एवार्त्विज्यकारिणः ॥५७॥

सत्राहीनावभिमतावाग्नियाज्यादिलक्षणौ ।
न भिन्ने प्रत्यहं पौण्डरीके युतसहस्तके ॥५८॥

विभज्य नयनं तेषां न सर्वाः स्युर्मनोऋ्चः ।
मानोपहृत्योर्वासः स्यादहीने तत्तु भिद्यते ॥५९॥

स्यादुपावहृतेरेव काले तद्वाससो ग्रहः ।

## सप्तमः पादः

पश्वङ्गानि हवींषि स्युस्तान्यप्येकादशैव तु ॥६०॥

नेज्याशेषात्स्विष्टकृतोऽध्यूध्नी हौत्रेडविक्रिया ।
वनिष्टुर्निहतः पात्रेऽप्याग्नीध्रेडस्य विक्रिया ॥६१॥

प्रैषानुवचनाभ्यां स्यात्प्रशास्तुरपि भक्षणम् ।
स भक्षयेद्भागमेकं कुर्वन्कार्यद्वय[1]मपि ॥६२॥

भक्षः प्रतिप्रस्थातुर्न वपाश्रपणकारिणः ।
अपूर्वो गृहमेधीय आज्यभागविधानतः ॥६३॥

ततोऽधिकं यावदुक्तं स्यात्स्विष्टकृदिडादिकम् ।
स्विष्टकृत्परिसंख्यात्वे प्राशित्रादीनि वारयेत् ॥६४॥

प्रापणीयातिथ्ययोर्न विकल्पे शंय्विडा[2]न्तते ।
पूर्वाभ्यामेव तु तयोः शंय्विडाभ्यां समापनम् ॥६५॥

१. कार्यद्वयी इति मू० प्र० पा० ।
२. नते इति मू० प्र० पा० ।

स्युरपूर्वा उपसदः स्रौवाघारविधानतः ।
अपूर्वोऽवभृथोऽपि स्यादाज्यभागविधानतः ॥६६॥

वृह्द्यवादिनियतं यत्र तस्य पुनर्विधिः ।
प्राकृतानां विकल्पादिर्न श्रुतैर्द्रव्यदेवतैः ॥६७॥

नाप्यौदुम्बरयूपेन खादिरस्य समुच्चयः ।
बाधन्ते वैकृताः शुक्ला व्रीह्यः प्राकृतान्यवान् ॥६८॥

सर्वेषु पञ्चावत्तत्वं पश्वङ्गेषु प्रवर्त्तते ।

**अष्टमः पादः**

पर्युदासो न होतारं न सोम इति तु स्तुतिः ॥६९॥

नातिरात्रे निषेधः स्यादनाहुतिरितिस्तुतिः ।
अभिघार्या नाभिघार्या इत्याद्यापि स्तुतिर्भवेत् ॥७०॥

अग्न्याधेये सामगानं न ब्रह्मेति निषिध्यते ।
दीक्षितो न जुहोतीति पुरुषार्थो निषिध्यते ॥७१॥

पदेनाहवनीयस्य सामान्यस्य निवर्त्तनम् ।
वैमृधादौ सामिधेनी साप्तदश्योपसंहृतिः ॥७२॥

न भवेद्दर्विहोमेषु स्वाहाकारोपसंहृतिः ।
अग्न्यतिग्राह्ययोरस्ति विकृतावतिदेशनम् ॥७३॥

स्याद्धविरेवावदातव्यं पुरोडाशादिकं हविः ।
चतुर्गृहीतन्तु भवेदुपांशुयजने हविः ॥७४॥

सान्नाय्ये न त्विति विधेः पूर्वभागो भवेत्स्तुतिः ।
उपांशुयाजे स्यादाज्यं हविर्ध्रौवविधानतः ॥७५॥

देवता तत्र तु भवेत्तान्त्रिकेष्वेव काचन ।
तत्रापि स्युर्विकल्पेन तिस्रो विष्ण्वादिदेवताः ।
स पौर्णमास्यामेव स्यादपि प्राक्सोम यागतः ॥७६॥

॥ इति दशमोऽध्यायः ॥

---

# अथैकादशोऽध्यायः

## प्रथमः पादः

आग्नेयादिफलं तन्त्रं भाष्येऽङ्गोपकृतिस्तथा ।
सा भवेदखिलैरङ्गैः काम्यावृत्त्याधिकं फलम् ॥१॥

यावत्फलोदयं हन्ति सकृत्सर्वौषधे त्वसौ ।
सकृदङ्गानुष्ठितिः स्यात्त्रयः कार्याः कपिञ्जलाः ॥२॥

यावत्स्वं दोहने गावो दर्शाङ्गानां तु तन्त्रता ।
सह प्रधानव्यवधेर्न कृष्णग्रीवयोर्भवेत् ॥३॥

## द्वितीयः पादः

स्याद्देशकालकर्त्तॄणामाग्नेयादिषु तन्त्रता ।
अङ्गानां मुख्यदेशाद्याः स्युः प्रयोगाङ्गभावनाः ॥४॥

दर्शे च पूर्णमासे च नाङ्गानामस्ति तन्त्रता ।
हविष्यध्वरकल्पायामप्येवं सङ्घभेदतः ॥५॥

प्राजापत्ये पशुगणे भवेत्तन्त्रं वसाहुतिः ।
भिन्नदेवेषु पशुषु न सा तन्त्रत्वमश्नुते ॥६॥

भवेत् यूपाहुतिस्तत्र यूपैकादशिनी गता ।
अपूर्णे वावभृथस्य स्यादङ्गनामप्यनुष्ठितिः ॥७॥

अङ्गावृत्तिर्देशभेदात् प्रघासेषु विहारयोः ।
तन्त्रेणैवोपकुर्वन्ति तयोर्ब्रह्मादयस्तथा ॥८॥

आपराग्निकहोमानामावृत्तिः कर्त्तृभेदतः ।
ब्रह्मसाम्नीत्येष विधिरालम्भोत्कर्षगोचरः ॥९॥

त्रींस्त्रीनितिविधिस्त्वेषः स्यात्पश्वन्तरगोचरः ।
अङ्गानां दशपेयाभिषेचनीयेन तन्त्रता ॥१०॥

निष्कासनेति वारुण्या न प्रचारान्तरे विधिः ।
निष्कास इत्यपि तथा चैककर्मान्तरे विधिः ॥११॥

## तृतीयः पादः

वेद्यादेर्वचनान्मुख्यभिन्नकालादिसङ्गतिः ।
सर्वेषु तन्त्रमाधानं यूपः सोमपशूत्रये ॥१२॥

तत्तक्षणाद्यपि तथा तन्त्रं स्यादपि तत्स्वरूः ।
अहर्गणे विषाणायाः प्रासनं चरमेऽहनि ॥१३॥

अन्त्याह्वाने वाग्विसर्गो नाना बीजावहन्तिषु ।
पशौ पौरोडाशिके स्यादाह्वाने वाग्विसर्जनम् ॥१४॥

प्रधानमात्रापवर्गे भवेद्वाग्निविमोचनम् ।
साङ्गान्तेऽग्निविमोको हि वार्त्तिके सम्प्रदर्शितः ॥१५॥

सुब्रह्मण्योपसत्काला तन्त्रेण स्यादहर्गणे ।
भिद्येत सुत्याकालात्तु कालभेदेन सान्वहम् ॥१६॥

प्रतिप्रयोगं देशादिभेदापेक्षा न युज्यते ।
आन्तात्पात्राणि धार्येरन् प्रतिपत्तिविधानतः ॥१७॥

आरभ्यपवमानेष्टिं भवत्येषाभिघारणम् ।
ऊर्ध्वं सकलसोमानां प्राजापत्यप्रचारणम् ॥१८॥

उत्कृष्यन्ते यदापेक्षा शब्दा हरिवदादयः ।

## चतुर्थः पादः

अङ्गावृत्तिः कर्त्तृभेदाद्भिन्नदक्षिणकर्मणाम् ॥१९॥

राजसूये कर्तृभेदेऽप्यधिष्ठानं न भिद्यते ।
भवत्यवेष्टौ पञ्चानां हविषां भिन्नतन्त्रता ॥२०॥

कामाय तन्त्रभेदः स्यात्पावमानहविस्त्रये ।
स्याद् द्वादशाहसुत्यानां तन्त्रं दीक्षोपसद्गुणाः ॥२१॥

सुत्याकालास्तु भिद्यन्ते सवनीयादिका गुणाः ।
सुब्रह्मण्योपसत्काला नान्हामभ्यासमृच्छति ॥२२॥

कुम्भीहृदयशूलाद्यास्तन्त्रं स्युः पाशुके गणे ।
तथैव भिन्नदैवत्ये न तु जात्यन्तरं तथा ॥२३॥

कपालानि न तन्त्रं स्युरनेकाश्वप्रतिग्रहे ।
सकृद्भवेद्धन्तिमन्त्रो नानावीजेषु भिद्यते ॥२४॥

निर्वापादिबहुत्वेन तन्मन्त्रावृत्तिरिष्यते ।
त्रिर्वेदीं प्रोक्षतीत्यादौ मन्त्र आदौ सकृद्भवेत् ॥२५॥

कण्डूनां यौगपद्यं चेत्कृष्यै त्वेति मनुः सकृत् ।
सकृन्मध्ये प्रबोधादावपि स्वप्नादिमन्त्रकः ॥२६॥

सकृत्प्रस्थानमन्त्रः स्याद्विश्रम्य गमनेष्वपि ।
भिद्यते प्रत्युपरवं मन्त्रः खननसाधनः ।
हविष्कृदध्रिगुमुखा भिद्यन्ते कालभेदतः ॥२७॥

॥ इत्येकादशोऽध्यायः ॥

---

# अथ द्वादशोऽध्यायः

## प्रथमः पादः

पश्वर्थानुष्ठितैरङ्गैः पुरोडाशेऽस्त्युपक्रिया ।
तत्राज्यभागौ कर्त्तव्यौ स्यातां तौ न पशौ यदि ॥१॥

सौमिकीष्टिषु वेदिः स्यात्तत्पात्राणि तु नेष्टिषु ।
शामित्रोऽग्निः पुरोडाशश्रपणे न प्रसज्यते ॥२॥

श्रप्यं प्राजहिते कौण्डपायिनामयनं हविः ।
सवनीयादिनिर्वापो न हविर्धानयोर्भवेत् ॥३॥

प्रायणीयादिषु पृथक् जागरः सौमिकाद्भवेत् ।
अध्वर्युमन्त्रा भिन्नाः स्युः प्राघासिकविहारयोः ॥४॥

इष्टिकर्मसु सोमाङ्गेष्वन्वाधानं न विद्यते ।
व्रतोपायनमप्येवं सोमार्थे नैव सिद्धितः ॥५॥

ग्रहणार्थाग्न्याहितिश्चेद्दीक्षेष्टौ सापरं भवेत् ।
सोमेष्टिषु न कर्त्तव्यं पत्नीसन्नहनं तथा ॥६॥

आरण्यभुक्तिरप्येवं कर्त्तव्यं शेषभक्षणम् ।
अन्वाहार्यं न दातव्यं भक्षणं त्वृत्विजां भवेत् ॥७॥

एतासु होतुर्वरणमदृष्टार्थत्वतो भवेत् ।
प्रोक्षणं सकृदेव स्यादातिथ्येष्टयादिबर्हिषाम् ॥८॥

तस्यास्तरणमन्त्रः स्यादावर्त्यः पशुकर्मणि ।
पशौ सन्नाहहरणमन्त्रयोर्नास्त्यनुष्ठितिः ॥९॥

## द्वितीयः पादः

अग्नयोर्गार्हपत्याद्या वैदिकेष्वेव कर्मसु ।
नियतः स्यात्पुरोडाशः सवनीयपशावपि ॥१०॥

सवनीयेषु न पृथगाह्वानं स्याद्धविष्कृतः ।
तथैव सौम्यचर्वादौ पाशुके नैव सिद्धितः ॥११॥

निशीष्टौ दर्शसंयुक्तमङ्गजातं प्रसज्जते ।
नारम्भणीया विकृतौ प्रकृत्यर्था प्रसज्जते ॥१२॥

विरुद्धसमवाये स्याद्भूयसामनुरोधनम् ।
तत्र तत्समतायां तु भवेन्मुख्यानुरोधनम् ॥१३॥

सुत्यायां नियतं पर्वं द्विधर्मा परिधिर्भवेत् ।
तत्र न स्युर्यूपधर्मा ये स्वधर्मविरोधिनः ॥१४॥

पशुतन्त्रान्तर्गतत्वात्पुरोडाशाः प्रसङ्गिनः ।
विकृतिश्चेत्प्रकृत्येकतन्त्रा सा तन्त्रिणी भवेत् ॥१५॥

बहिराग्रयणे कांस्यभोजिन्यायेन पुष्पितम् ।
द्यावापृथिव्यस्यैव स्यात्तावता नैव तन्त्रिता ॥१६॥

## तृतीयः पादः

वत्सत्वग्वाससोर्भिन्नकार्यत्वेन समुच्चयः ।

अग्नौ दैक्षपशोस्तन्त्रे प्रसङ्गिहविरष्टकम् ॥१७॥

समुच्चिता ऋजुत्वाद्या व्रीह्याद्यास्तु विकल्पिताः ।
वैश्[1]वानरी पथिकृतीत्याद्या अपि विकल्पिताः ॥१८॥

भिन्नस्कन्नादिहोमानां दर्शादिषु समुच्चयः ।
मन्त्राध्ययनधर्माणां कर्मकालेषु नादरः ॥१९॥

कार्यः प्रयोगो मन्त्राणां स्वस्वरेणैव कर्मसु ।
ये पुनर्ब्राह्मणाधीताः तेषां भवति तत्स्वरः ॥२०॥

मन्त्राणामवसानेन कर्मादीन् सन्निपातयेत् ।
समान एव न्यायोऽयं वसोर्धाराहुतीष्वपि ॥२१॥

स्यादाघारेऽप्ययं न्यायो मन्त्रा ग्राह्या विकल्पिताः ।
चतुर्भिरभ्रिमित्यादौ भवेत्तेषां समुच्चयः ॥२२॥

उरु प्रथस्वेत्यादीनां न भवेत्तु समुच्चयः ।
समुच्चयो भवेदेव क्रियमाणानुवादिनाम् ॥२३॥

## चतुर्थः पादः

जपस्तुत्यादिमन्त्राणां धर्मार्थत्वात्समुच्चयः ।
याज्यानुवाक्यायुगलमनेकं स्याद्विकल्पितम् ॥२४॥

---

१. 'वैश्वानरं द्वादशकपालं निर्वपेत्' इति, 'अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत्, इति मन्त्रद्वयमस्ति। अतः 'वैश्वानरे' इत्यपि भवितुमर्हति ।

समुच्चेयाः क्रयाः सोमे गुदयागे समुच्चयः ।
अग्न्याधेये दक्षिणाः स्युः संख्याभेदाद्विकल्पिताः ॥२५॥

जाघनीनां पशुगणे न भवेत्तत्समुच्चयः ।
वार्क्षादीनां स्यात्काम्ये न नित्योख्यविनिवर्त्तनम् ॥२६॥

काम्यो नाहवनीयः स्यादाधानादेरभावतः ।
तेषु नाधानसंस्कारो नित्योख्यस्य न धारणम् ॥२७॥

कश्चिदेव परार्थानि कुर्याद् बहुषु यष्टृषु ।
तेषु यः कश्चिदेव स्यात्सत्रे गृहपतिर्मतः ॥२८॥
सत्रेऽपि सर्वे कुर्वीरन् संस्कारानञ्जनादिकान् ।
याजमानार्त्विज्ययोर्विप्रतिषेधे परं बली ।
आर्त्विज्यं ब्राह्मणा एव कुर्युः सर्वेषु कर्मसु ॥२९॥

॥ इति द्वादशोऽध्यायः ॥

॥ इति श्रीकुमारिलस्वामिकृतं लघुवार्त्तिकम् ॥

# अथ द्वितीयोऽध्यायः

## प्रथमः पादः

[टीकेयं प्राचीना। कृतप्रयत्नेनापि मया समग्रा मातृका नोपलब्धा। यावती मातृका समुपलब्धा, तावन्मात्रमेवेदं ग्रन्थरत्नं समुपस्थाप्यते भवतां पुरस्तात्। कदाचित् पूर्णा मातृका समुपलभ्येत चेत्तर्हि यथासमयं पुनः प्रकाशनाय प्रयतिष्य इति विनिवेदयति—सम्पादकः।]

'सोमेन यजेते'त्यादिकमदृष्टार्थकवाक्यजातगतक्रियाकारकपदजातं क्रियाकारकसम्बन्धं परित्यज्य सोमसमप्रधानतया भावनाकरणं समर्पयन् प्रत्येकमपूर्वकल्पकं प्रधानाख्यातार्थभावनान्वयसम्भवे उपपदार्थस्य धात्वर्थानन्वयात्। ननु सोमेन यजेतेत्युत्पन्नस्य यागस्य ज्योतिष्टोमवाक्ये फलसाधनत्वप्रतीतेः कथं सोमपदार्थस्य फलभावनान्वय इति चेत्। एतदधिकरणद्वयसिद्धवत्कारेण गुणविधिनामधेयविचारस्य कृततयाऽत्र पूर्वपक्षे ज्योतिष्टोमगुणधात्वर्थयोः स्वर्गभावनाकरणत्वं सोमवाक्येऽप्युभयोरध्याहृतफलभावनाकरणत्वमिति चेत् — **धर्मः प्रतिपदं नास्ति**। सोमधात्वर्थयोर्भावनाकरणत्वे भावनाभाव्यनिर्वर्त्तकस्यैव तत्करणत्वरूपतया द्वयोः फलजनकत्वापत्तौ फलापूर्वद्वयं स्यात्। न चाग्नेयादीनामेकफलापूर्वजनकत्ववदिहापि स्यादिति शङ्क्यम्। तेषां समुच्चितानां कारकान्वयेन तथात्वेऽप्यत्र सोमे पृथक्करणविभक्तिश्रवणेन यजेतेत्यत्रापि यजेः स्वार्थविशेषितकारकलक्षकतया समुच्चित्य द्वयोः कारकान्वयेनापूर्वद्वयकल्पनावश्यंभावात्। एकवाक्योपादानादारूण्यादिवत् कारकाणां समुच्चयेऽपि कारके समुच्चित्यासम्बन्धात्। तस्माद् लाघवादेकं भावनाकरणम्, इतरन्तदर्थम् ॥१॥

फलस्य साध्यस्य सिद्धसाधनाकांक्षत्वादुपपदार्थस्य करणत्वम्। धात्वर्थन्तु करणानुग्राहकतया तदन्वयीति चेत्—**भावार्थेभ्यश्च तज्जनिः**। पदश्रुत्या धात्वर्थ एव स्वसाधननिष्पन्नः क्रियाकरणम्, अन्यस्य वाक्येन

तत्सम्बन्धः । तच्च दुर्बलं श्रुतेः । मिद्र[श्र]रूप द्रव्ये यागादेरदृष्टोपकारकत्वापत्त्या गौरवतादवस्थ्याच्च । तस्माद्धात्वर्थ एव भावनाकरणम्, तत एवापूर्वम् । धात्वर्थातिरिक्ता च भावना, यजतीत्यस्य यागं करोतीति विवरणात् । कृधात्वर्थरूपा तिप्रत्ययान्वयव्यतिरेकानुविधायिज्ञानविषयत्वात्तद्वाच्या । प्रकृतधात्वर्थातिरिक्ता स्वास्थ्यकामः शयीतेत्यादौ धातोरकर्मकत्वेऽपि स्वास्थ्यादिकर्मिका, ओदनं पचेतेत्यादौ धात्वर्थकर्मकर्मिका च सिद्धकर्तृकक्रिया आख्यातेष्ववगम्यत इति ।।२।।

आख्यातस्यापूर्वकल्पकत्वमसिद्धम् । 'यजेत स्वर्गकाम' इत्यादौ धात्वर्थस्यैव स्वर्गसाधनत्वबोधनात् । न च विनष्टस्य कालान्तरफलाजनकत्वात्तत्कल्पनम् । तथात्वे तेनैवान्यथासिद्ध्यापातात् । तस्य व्यापारादिरूपत्वे इन्द्रियाभावे तत्सन्निकर्षस्येव यागाभावेऽभावापातात् । अतः शास्त्राद्विनष्टस्यापि जनकत्वं कल्प्यम् । तावदवस्थानं वा तृतीयादिक्षणे फलबलादयोग्यत्वं वेति चेत्—अस्ति धर्मश्चिरस्थायी । न तावद्वेदो विनष्टस्य साधनत्वं ब्रूते । यागे श्रुतं साधनत्वमजनितव्यापारे न सम्भवतीति तन्निर्वाहाय लोकानुसारात्तत्कल्पनम् । फलोपपत्तये कल्प्यमानं स्मृतिजनकभावनासंस्कारवत्तदाश्रये कल्प्यते । स्वध्वंसव्यापारकत्वे फलानन्त्यम् । प्रतियोगितदभावयोरेकत्र जनकत्वकीर्त्तनादिना तन्नाशासम्भवे आरादुपकारकाङ्गवैफल्यं च स्यात् । द्वैतेत्यस्य तेन विनापि भावात् । तृतीयादिक्षणेऽयोग्यत्वकल्पनं च प्रमाणविरुद्धम् । तस्मादस्ति धर्मश्चिरस्थायी । तत्प्रक्रिया त्वित्थम् — दृष्टार्थधात्वर्थातिरिक्ते धात्वर्थे यत्र निरपेक्षकारकशक्तिप्रमितिस्तत्र तत्रैकमपूर्वमिति ।।३।।

'व्रीहीनवहन्ति', 'पिष्टंसंयौती'त्यादावपि विध्यनुपपत्त्या कल्प्यमानमपूर्वं धात्वर्थादेव । अन्यथा अपूर्वद्वयकल्पनागौरवम् । तथा च 'व्रीहीभिरवहन्ति' 'पिष्टेन संयौती'ति क्रियाप्रधानतेति चेत्—गुणः संयवनादिकः । श्रुतविनियोगभङ्गप्रसङ्गान्न प्रधानकर्मत्वम् । धात्वर्थस्य कर्मकारके तुषविमोकादि दृष्टातिशयजनकत्वात् । द्रव्यस्य च पुरोडाशद्वारा यागसाधनत्वान्न कुतोऽदृष्टार्थत्वम् । कल्प्यविधेस्तु अप्राप्तांशपरिपूरणरूपनियमफलकत्वात् । तस्य च दृष्टाभावेनादृष्टार्थत्वम् । तस्माद् गुणकर्म संयवनादि ।।४।।

'व्रीहीन् प्रोक्षति' 'स्रुचः सम्मार्ष्टि' इत्यादौ दृष्टोपकाराभावात् प्रोक्षणादीनां न गुणकर्मत्वम्। द्वितीयया द्रव्यप्राधान्यावगमात्तत्त्वमिति चेत्। 'बल्वजात् शिख उकान् कुर्वि'ति लोके, 'सक्तून् जुहोती'ति वेदे च तस्याप्राधान्य-व्यभिचारात्। तथा च 'व्रीहिभिः प्रोक्षती'त्यादिना विपरिणामात् प्रधान-कर्मत्वमिति चेत् — प्रोक्षतीत्याद्यपि तथा गुणकर्म। न दृष्टोपकारजनकत्वं गुणकर्मत्वम्; किन्तु द्वितीयान्तशब्देन द्रव्यमुद्दिश्य विधीयमानत्वम्। न च द्वितीयायाः कर्मत्वे व्यभिचारः। उक्तस्थले तस्याः करणत्वलक्षकत्वात्। तस्य तद्वाच्यत्वे परशोः करणत्वविवक्षायां परशुमिति स्यात्। पाणिनिनापि कर्त्तुरीप्सिततमं कर्मेत्यादिसूत्रद्वयेनेप्सिततदितरसाधारणं साध्यत्वं कर्मत्व-मित्यनुगमय्य कर्मणि द्वितीयेत्युक्तम्। तन्मूलप्रयोगाश्च लोकवेदयोः स्पष्टाः। अतो गुणकर्म प्रोक्षणादि ॥५॥

'आज्यैः स्तुवते' 'प्रउगं शंसती'त्यादिना विहिते प्रगीताप्रगीतमन्त्रसाध्य-गुणिनिष्ठगुणाभिधानात्मके स्तोत्रशस्त्रे गुणकर्मणी। गुणे कीर्त्यमाने गुणिन्यां देवतायां स्मृतिः संस्कारो जायते। संस्कृतायाश्च याज्यादिसंस्कृताया इव यागाङ्गतेति दृष्टार्थेति चेत्—प्रधानं स्तौतिशंसती। आख्यातयोः स्तुतितात्पर्ये स्तुतिरूपस्वार्थपरित्यागेन तल्लक्षकता स्यात्। वक्रालकांतो देवदत्त इत्यत्रेव यो वक्रालकान्तस्तमानयेत्यत्रान्यतात्पर्ये स्तुत्यप्रतीतेः। न च श्रुतिबाधेन दृष्टार्थता युक्ता। अतिप्रसङ्गात्। अतोऽदृष्टार्थे प्रधानकर्मणी स्तोत्रशस्त्रे। एवञ्च माहेन्द्रग्रहयजिसन्निधौ इन्द्रस्तुत्युपपत्तिः। अन्यथा लक्षणाद्या-पत्तिरिति ॥६॥

'देवांश्च याभिर्यजते' 'ददाती'त्यादिमन्त्रस्थाख्यातशब्दा विधायकाः' पञ्चमलकारतया अप्रवृत्तप्रवर्त्तनस्वारस्यात्। अभ्यासेन कर्मान्तरमिति चेत्— ददातियजतीत्याद्या मन्त्रस्था न विधायकाः। यच्छन्दाद्युपहतविधिशक्ति-कत्वात्प्राप्तार्थत्वादन्यपरत्वाच्च अप्राप्तार्थतया विधिपरत्वे भवन्त्येव विधायका इति ॥७॥

प्रसङ्गात् 'अहे बुध्निय मन्त्रं मे गोपाये'ति वाक्यस्थमन्त्रपदस्य प्रवृत्ति-निमित्तमुच्यते। मन्त्रास्ते ये प्रयोगार्थमनुष्ठेयाभिधायकाः। प्रयोगसमवाय्यर्था-

भिधायकत्वं मन्त्रत्वम्। ब्राह्मणं तूक्तार्थस्य विधायकमिति न तत्रातिप्रसङ्गः। याज्ञिकप्रसिद्धिविषयत्वस्योपलक्षणमिदम् ॥८॥

'एतद् ब्राह्मण ऐन्द्राग्न' इत्यादि वाक्यस्थब्राह्मणपदप्रवृत्तिनिमित्त-मुच्यते। **वेदेषु मन्त्रभागान्यो भागो ब्राह्मणमुच्यते।** मन्त्रभिन्नभेदत्वं ब्राह्मणत्वम् ॥९॥

ऊहप्रवरनामानि मन्त्रैकवाक्यत्वान्मन्त्रकार्यकरत्वाच्च मन्त्रा इति चेत्—**ऊहप्रवरनामानि प्रपद्यन्ते न मन्त्रताम्।** रथघोषेऽतिप्रसक्तेर्न तत्कार्य-करत्वं तत्त्वे प्रयोजकम्। तदेकवाक्यत्वमर्थमध्यग्रनबहिर्भूतत्वादप्रयोजकम्। अतो न मन्त्रा ऊहादयः ॥१०॥

'ऋचः सामानि यजूंषी'त्यत्र ऋगादिपदप्रवृत्तिनिमित्तानि क्रमेणो-च्यन्ते। **पादबन्धवती ऋक् स्यात्।** पादबद्धत्वे सत्येकप्रयोजनकमन्त्रत्वमेक ऋक्त्वम् ॥११॥

**गीतिः सामेति गीयते।** मन्त्रत्वे सति गानत्वम् ॥१२॥

**यजुर्मन्त्रस्तदितरः।** ऋक्सामभ्यामन्यत्वे सति मन्त्रत्वं यजुष्ट्वम् ॥१३॥

परसम्बोधनार्था मन्त्रा निगदाः। यजुर्भ्योऽन्ये इमे निगदाः, इमानि यजूंषीति व्यपदेशभेदात्। उच्चैष्ट्वोपांशुत्वरूपविरुद्धधर्मप्रयोगाच्चेति चेत्—**निगदोऽपि भवेद् यजुः।** व्यपदेशभेदो गोबलीवर्दन्यायेनोपपन्नः। प्रयोजन-वशात्प्राप्तोच्चैस्त्वानुवाद उच्चैर्निगदेनेति। यजुष्ट्वावच्छिन्ने उपांशु यजुषेति वाचनिकमप्युपांशुत्वमङ्गत्वान्मन्त्रप्रयोजनेन सामर्थ्याप्राप्तेनाप्युच्चै-स्त्वेन बाध्यते। शिष्टाकोपन्यायात्। उपांशुत्वविधेर्विषय [ ? ] विधित्वे लघुत्वात्। निगदेषु सर्वथोपांशुत्वाप्राप्तेर्न तस्य तद्विधिविषयत्वम्। अतो न बाधशङ्कापि। मन्त्रत्रैविध्यप्रतिपादनाच्च यजूंष्येव निगदाः ॥१४॥

यजुषामवान्तरपरिमाणमध्ये सृ·····'प्रसिद्धमुच्यते। **यावत्साकांक्ष-मेकार्थं तावदेकं यजुर्मतम्।** साकांक्षत्वे सति एकप्रयोजनकत्वे सति

विभज्यमानमेकं यजुः। ततोऽन्यद्यजुरन्तरम् । एकप्रयोजनकत्वं 'भगो वा विभजत्वि'त्यादावतिप्रसक्तम् । अतः साकांक्षत्वमिति । तन्मात्रं 'स्योनं त' इत्यादौ। अत एकप्रयोजनकत्वमिति । उभयं प्रकृतिप्रत्ययोरतिप्रसक्तम् । अतो विभज्यमानत्वमिति ॥१५॥

'इषे त्वोर्जे त्वे'येतदन्त एको मन्त्रः दृष्टाऽप्रतीत्याऽदृष्टे कल्प्ये, लाघवात्तदेकत्वे च तस्मिन्नुद्देश्ये विभज्यमानसाकांक्षत्वात् । विनियोजकवचन-द्वयं तु आदिमध्यप्रतीकाभ्यां कृत्स्नस्योभयत्र विनियोजकमिति चेत्— **इषे त्वादौ न मन्त्रैक्यं विनियुक्त्यार्थभेदतः ।** 'इषे त्वेति शाखां छिनत्ति,' 'ऊर्जे त्वेत्यनुमार्ष्टी'ति भेदेन विनियोगान्न एकमन्त्रत्वम् । अंशद्वय-स्याप्यन्योन्यानाकांक्षत्वस्य स्फुटतया अदृष्टार्थत्वेऽपि तद्द्वयकल्पनात् । विनियोगवशाच्छिनद्मीत्यादिक्रियाध्याहारेण दृष्टार्थत्वेन प्रयोजन-भेदाच्चेति ॥१६॥

'तनूर्वर्षिष्ठे'त्यस्य 'या ते अग्ने अयाशया, इत्यस्योपरि अपेक्षितस्थान-पठितस्य तदन्विततया निराकांक्षत्वात् 'या ते अग्ने रजाशया' इत्यस्य साकांक्षत्वेऽपि पृष्ठलग्नतया व्यवहितस्यापि शेषस्यापेक्षितस्थानत्वाभावात् । हराशयेत्यनेनाव्यवधानाभावाच्च न सम्बन्धः। किन्त्वध्याहार इति चेत्— **आकांक्षयानुषङ्गः स्यात् 'यात' इत्यादिके मनौ ।** मन्त्र इत्यर्थः। त्रितयार्थ-स्यापि सर्वोपरिसकृत्पाठानुपपत्त्या क्वचित्पठितस्य त्रिजातीयव्यवधाना-भावमात्रेण द्वितीयशिरस्यानीतः स्यात्। एवं तृतीयाव्यवहितस्य तदेक-वाक्यतयानुषङ्गोपपत्तौ न लौकिकाध्याहार इति । एवमपि 'चित्पतिस्त्वा पुनातु, वाक्पतिस्त्वा पुनात्वि'त्यनयोर्निराकांक्षत्वादच्छिद्रादिशेषस्य 'देवस्त्वा सविता पुनात्विति' तृतीयेनान्वितत्वेन तथात्वात् । न पूर्वयोरनुषङ्ग इति चेत् — **चित्पतिस्त्वेत्यादिकेव क्रियैकत्ववशाद् भवेत् ।** क्रियायाः पावन-स्यैकत्ववशाच्चित्पतिस्त्वेत्यादिके मन्त्रद्वये पावनार्थस्याच्छिद्रादेरनुषङ्गो भवेत्। दर्भपुञ्जीलैः पावयतीति विहितस्य पावनस्य भेदे प्रमाणाभावात्। न च तुल्यार्थत्वान्मन्त्राणां विकल्पः । लिङ्गप्राप्तानां पुनः प्रत्यक्षवचनेन विधानात् 'चतुर्भिरभ्रिमि'त्यादिवत्संख्यायाः अविधानेऽपि समुच्चयावगमात्।

न द्वादशे ब्राह्मणविहितेषु च संख्यावत्सर्वेषामुपदिष्टत्वादित्यधिकरणे लिङ्गविनियोज्यमन्त्रेषु ब्राह्मणस्य गुणाद्यर्थत्वोक्तेः समुच्चयार्थत्वनिराकरणाच्च न तेन समुच्चयः स्यादिति शङ्क्यम् । अत्र विधेयगुणाभावेन तस्य समुच्चयैकप्रयोजनत्वात् । 'चित्पतिस्त्वा पुनात्वि'त्येतैः प्रतिमन्त्रमिति यज्ञसूत्राच्च ॥१७॥

'सं ते वायुर्वातेन गच्छतामि'त्यत्र संगच्छतामिति क्रियापदस्याङ्गानीति बहुवचनान्तेनायोग्यतयानन्वितस्याशिषेत्यनेन नानुषङ्गः । असम्बन्धिपदेन गच्छन्तामित्यध्याहृतेन व्यवधानदिति । तत्राप्यध्याहार एव । तदाह—
**सं यज्ञपतिरित्यत्र व्यवायन्नानुषज्यते ॥१८॥**

**॥ इति लघुवार्त्तिकटीकायां द्वितीयाध्यायस्य प्रथमः पादः ॥**

---

## द्वितीयः पादः

एकप्रकरणगतेषु यजतिददातिजुहोतीत्यादिषु धात्वर्थभेदेऽपि न भावनाभेदः। एकस्या एव स्वं प्रत्युपादीयमानैर्धात्वर्थैरवच्छेदसम्भवात्। प्रत्ययार्थभावनायां तदेकत्वे भेदयोगाच्च। तद्भेदे फलापवर्गित्वाच्चासामपूर्वभेदापत्तेः। न च भावनैक्येऽपि कारकभेदादपूर्वभेदः शङ्क्यः। त्रिभिरेककारकसम्भवे लक्षणा सम्भवात्। तस्मादेका भावनेति चेत्— **शब्दान्तरे कर्मभेदः**। भावनाभेद इत्यर्थः। पदश्रुत्या यागोपरक्ततया वाक्याद्धात्वन्तरार्थेनानवच्छेदात्। तत्तद्धात्वर्थावच्छिन्नान्यस्यैव सा तत्तत्पदश्रुत्या प्रतिपाद्यते। न चैवं गुणादेव भेदः, तस्य धात्वर्थाङ्गगुणविषयत्वात्प्रत्ययांशैक्येऽपि तत्तद्धातूपरक्तरूपभेदाद् भावनाभेदः। ततश्चापूर्वं भेद इति ॥१॥

'समिधो यजती'त्यादावुपपदान्युद्धृत्य यजतीति पञ्चकृत्वः श्रुते पूर्ववद्धातुभेदाभावादेकयागोपरक्तैः का भावना प्रतिपाद्यते। समिन्नामके यागे प्रथमं विहिते द्वितीयादिश्रवणं तत्रैव विकल्पेन तनूनपादादिदेवता विदधातीति चेत्— **स्यादभ्यासे च तद्भिदा**। तयोर्धात्वर्थभावनायोर्भिदा भेद इत्यर्थः। विधेरप्रवृत्तप्रवर्त्तनस्वारस्याभङ्गाय। न च गुणविधानात्तदुपपत्तिः। तनूनपादादिशब्दानां द्वितीयान्ततया देवतात्वबोधेऽसामर्थ्येन 'समिधोऽग्न'इत्यादिमन्त्रप्राप्तदेवतासम्बन्धेन नामतया देवतानुवादकतया वा चरितार्थत्वेन धात्वर्थभावनयोरेव विधेयत्वात्। तस्माद्धात्वर्थभावनयोर्भेदः ॥२॥

'य एवं विद्वान्पौर्णमासीं यजते,' 'य एवं विद्वानमावास्यां यजत' इत्यत्रापि पूर्ववत्कर्मभेदः। 'वार्त्रघ्नी पौर्णमास्यामनूच्येते वृधन्वती अमावास्यायामि'त्याज्यभागक्रमाद्विच्छिद्य वा श्येनेनैककर्मानुवादेन मन्त्रद्वय-

विधानेन तयोरेकस्याग्नेयतया एकस्य सौम्यतया वैकल्पिकदेवतासमर्पकत्वात् । ध्रौवाज्यलाभाच्च नारूपत्वम् । आग्नेयादिवाक्यैर्द्रव्यदेवतयोः समर्पणाद्वा । अन्यथानुवादवैयर्थ्यम् । 'पौर्णमास्यां पौर्णमास्या यजेत' अमावास्याया-मावास्यया यजेते'त्यनयोरपि । मम तु विद्वद्वाक्यविहितकर्मणोः कालविधिपरत्वम् तस्मादुभयं न कर्मान्तरविधिरिति चेत् — **सङ्घानुवादके विद्वद्वाक्ये ।** वार्त्रघ्नीपौर्णमास्यामित्यनयोर्लिङ्गक्रमाभ्यामाज्यभागाङ्गतया प्राप्तयुगलद्वयस्य पर्वणोरव्यवस्थया प्राप्तौ तदबाधेन व्यवस्थामात्रविधिपरतया नानयोः कर्मणोरपूर्वमन्त्रविधायित्वम्, येन देवता प्राप्येत । द्रव्यदेवतयोः प्राप्तकर्मा-नुवादेन विधानानुपपत्त्या नाग्नेयादिवाक्यैरपि रूपलाभः । अतस्त्रिकस्य त्रिकस्यानुवादेन समुदायद्वयसम्पादके विद्वद्वाक्ये तत्प्रयोजनं फलवाक्यस्थ-नामपदगतद्विवचनोपपत्तिः । 'पौर्णमास्यां पौर्णमास्ये'ति वाक्यद्वयं तु त्रिकस्य त्रिकस्यैकप्रयोगविधायकम् । अतः समुदायानुवादके विद्वद्वाक्ये ॥३॥

'उपांशुयाजमन्तरा यजतीति' विष्ण्वादिवाक्यविहितयागानुवादो, न यागविधिः । देवताभावेनारूपत्वात् । हौत्रे शाखाभेदेनाम्नातानां वैष्णवप्राजा-पत्याग्नीषोमीययाज्यानुवाक्यायुगलानां विष्ण्वादिदेवताविशिष्टयागेषु विष्ण्वादि-वाक्यस्थतव्यप्रत्ययविहितेषु लिङ्गक्रमाभ्यां सम्बन्धात् । अनुवादस्य च वैष्णवप्राजापत्ययोरन्तरालकालविधायित्वेनार्थवत्त्वात् । न च यथा 'न गिरा गिरे'ति निषेधानुवादसामर्थ्यादैरं कृत्वोद्गेयमिथि विधौ तत्स्थानत्वनियमः । तथा अन्तरालानुवादसामर्थ्यात् यागानां तत्कालत्वसिद्धिरिति शङ्क्यम् । प्रत्यक्षकालविध्यभावे प्रयोगविधिसामर्थ्यसिद्धप्रधानकालवतां प्रयाजादीना-मिव तयोः फलवाक्यानन्वयप्रसङ्गात् । तस्मात् समुदायानुवाद इति चेत्— **न त्वन्तरा वचः ।**

'जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावित्'युपक्रम एवान्तराले किञ्चिद्विधित्सितमित्यवगमादन्तरा वाक्य एव यागविधिर्न विष्ण्वादिवाक्ये, अन्तरालसंयोगाभावात् । एकोपक्रमावसानतया प्रतीतैक-वाक्यत्वस्य भङ्गापत्तेश्च । कर्मणि कृत्यप्रत्ययानां देवतासंस्कारविधित्व-प्रतीत्या विष्णवे यष्टव्यमित्यादिविपरिणामक्लेशाच्च । तस्मात् यागान्तरा-

भावात् याज्यानुवाक्या युगलत्रयमन्तरा वाक्यविहितकर्मण्येव क्रमप्रमाणेन सम्बद्धं विकल्पेन देवताः समर्पयतीति नारूपत्वम् । अतो न समुदायानुवादः ।।४।।

'अग्निहोत्रं जुहोतीति' न कर्मविधिः, जुहोतिसामान्यस्य विध्यनन्वयात् । विरोधोपस्थापकद्रव्यादिसम्बन्धाप्रतीतेः । नाम्नश्च सामान्यानन्वयेन विशेषाकांक्षत्वात्, द्रव्यालाभाच्च । दध्यादीनां सिद्धरूपाणां पुरुषव्यापारव्याप्यविषयकविध्यनन्वयेनाग्निहोत्रानुवादेन विध्यनुपपत्त्या दध्यादिवाक्यानां तत्तद्द्रव्यविशिष्टहोमविधिपरत्वात् । अतस्तत्समुदायानुवादोऽग्निहोत्रं जुहोतीति । तत्फलं च दशानामपि होमानामग्निहोत्रनामकत्वेनैकसमुदायापत्त्या चा'ग्निहोत्रं जुहुयात् स्वर्गकाम' इति श्रुतफलसम्बन्धः । एव'मृजुमाघारयती'त्यादिभिर्विहिताघाराणां समुदायानुवादः, आघारमाघारयतीति । तत्प्रयोजनञ्चेद् — 'ऊर्ध्वोऽध्वर' इति । विहितमन्त्रस्य त्रिषु सम्बन्ध इति चेत् — नाप्याघाराग्निहोत्रोक्तिः । न तावदग्निहोत्रवाक्ये विध्यनुपपत्तिः । अन्याविहितहोमविशेषस्य । जुहोतिना लक्षणयोपस्थितस्य तन्नामकस्य विध्यन्वयात् नापि द्रव्यालाभः, दध्यादिवाक्यस्य विधीनां प्रतीतितो विशिष्टहोमविषयत्वेऽपि प्राप्ताप्राप्तविवेकेन होमानुवादेन दध्यादौ पर्यवसानात् । एवमाघारवाक्येष्वपि । अतो नाघाराग्निहोत्रशब्दौ समुदायानुवादिनौ ।।५।।

'ऐन्द्रवायवं गृह्णाती'त्यादिवाक्येषु द्रव्यदेवतासम्बन्धकल्पिता यागा विधीयन्ते । तेन देवताविशिष्टग्रहणमात्रम्, तत्र तस्या अनुपयोगात् । न च ग्रहणमात्रात्तद्दैवत्यता भवति । तथा च तावतां यागानां 'सोमेन यजेते'ति यजतिः समुदायानुवादः । सोमशब्दो ग्रहणानुपपत्तिप्राप्तद्रव्यनियमार्थः ।

यद्वा 'अण्व्या धारया गृह्णाती'ति प्रकृत्यैन्द्रवायवादिवाक्यप्रवृत्तेर्धारासमर्थप्रदेयस्य प्रकृतिनियमार्थः सः । 'व्रीहिभिर्यजेते'ति यागाङ्गतया विहितव्रीहीणामाग्नेयादिवाक्यविहितपुरोडाशप्रकृतिनियमे पर्यवसानवत् ।

यद्वा 'सोममभिषुणोति', 'सोममाप्लावयति' 'अण्व्या धारया गृह्णाती'ति प्रकृत्यैन्द्रवायवादिवाक्यप्रवृत्तेः पूर्वपूर्वस्योत्तरोत्तरेण सम्बन्धात् । सोमप्राप्तेः

तत्प्रख्यन्यायेनानूदितानां नामधेयं सोमशब्दः। एवं 'हृदयस्याग्रेऽवद्यती'त्यादिना विहितावदानकर्मणो हृदयादेः 'अग्नीषोमीयं पशुमालभत' इति श्रुतपशुपदेन लक्षणयानूदितस्याग्नीषोमीयपदेन प्रत्येकं देवतासम्बन्धे तावन्तो यागाः कल्प्यन्ते। आलभतिरवदानविध्यर्थप्राप्तस्पर्शविधायकः। प्रत्ययस्तु द्रव्यदेवतयोः सम्बन्धविधायकः।

यद्वा आष्टमिकन्यायेन हृदयाद्यवदान.................................. साधनत्व प्रतीतेस्तावत्सु यागेषु कल्पितेष्वालभतिनाताननूद्याग्नीषोमीयपदेन पशुशब्दानूदितहृदयादिद्वारा यागेषु देवताविधानम्। तस्मादालभतियजती समुदायानुवादाविति चेत् — **नाप्युक्तौ पशुसोमयोः**। पशुसोमशब्दावालभतियजतिलक्षणकौ। न तावत्सोमशब्देन प्रदेयनियमः। अण्व्या धारयेतिवाक्यसन्निहितधारामर्थद्रव्यस्यैव गृह्णातीति कर्मत्वेन लतानियमायोगात्। नापि स नामधेयं सोमस्य, प्राप्तभावेन तत्प्रख्यन्यायानवतारात्। अभिषवादिवाक्यानां विनियोगभङ्गेनारादुपकारकाङ्गविधायित्वापत्तेः। सोमस्यापूर्वमेव यागाङ्गत्वावगतौ 'व्रीहीनवहन्ती'त्यादिवदपूर्वसाधनलक्षणया श्रुतविनियोगः स्यात्, न त्वेतन्नामधेयत्वेऽस्ति। न च 'तप्ते पयसी'त्यादिवत्संस्कृतस्य विनियोगः। सा वैश्वदेवीतिवदैन्द्रवायवा हि वाक्ये तत्पदस्य संस्कृतग्राहिणाऽभावात्। सन्निधानस्य त्वितरेतरानालोचनेन विहितानां युगपत्प्रकरणग्रहणेन बाधात्। प्रकरणस्य चाभिषुतद्रव्याग्राहकत्वात्। धारासमर्थद्रव्यमात्रेणासन्निहितेन यागानां निराकांक्षतया आरादुपकारकत्वेनाभिषवादेर्द्रव्योपसर्जनस्यैके ग्रहणात्। तस्मान्न नामधेयं सोमशब्दः, नापि प्रदेयप्रकृतिनियमार्थः। ऐन्द्रवायवादिवाक्ये ग्रहणसंस्कारमात्रस्य विधानात्। न च ग्रहणेनैन्द्रवायवत्वं न स्यादिति वाच्यम्। 'सोमेन यजेते'ति वाक्येन सोमविशिष्टयागे विहिते स ग्रहणवाक्यगतद्रव्यदेवतासम्बन्धानुपपादयन् ग्रहणेन तद्दैवत्ये कर्त्तव्ये सहायीभवति। दशमुष्टिपरिमितसोमस्य रसानामकल्प्य सम्बन्धस्य तया नानाग्रहेषु गृहीतेषु तेषां दृष्टार्थत्वाय समुच्चये वक्तव्ये 'दशैतानध्वर्युरि'त्यादिक्रमसमुच्चयदर्शनमुपपद्यते। 'अग्नीषोमीयं पशुमालभत' इत्यत्रापि द्रव्यदेवताविशिष्टे यागे विहिते पशोर्विशसनश्रवणाद्दाशमिकन्यायेन हृदयादिद्वारा तस्याङ्गत्वात्तदवदानानि संस्कारकर्माणि भवन्तीति न पशुशब्दे लाक्षणिकत्वम्। अतो नालभतियजती समुदायानुवादौ ॥६॥

'सप्तदश प्राजापत्यान्पशूनालभत'इत्यत्र पशुशब्दे एकशेषे कृते सप्तदशपदेन संख्यावैशिष्ट्ये पशुषु बाधिते इतरेतरयुक्तेषु संख्याविशिष्टेषु तेषु प्राजापत्यपदेन देवतासम्बन्धकरणेन सम्बन्धैक्यात्तत्कल्पितो यागोऽपि सप्तदशपशुद्रव्यकप्रजापतिदेवताक एक एव भवतीति चेत् — **प्राजापत्येषु पशुषु संख्यया कर्मणां भिदा**। यदि सप्तदशपशुद्रव्यकत्वं यागस्य स्यात्, तदैकपशुनिष्पन्नैकादशावदानगण एकैकस्मिन् यागेऽङ्गमित्यग्नीषोमीयात्प्रकृतिपरम्परया प्राप्तं बाध्येत। न च तस्य प्रकृतावार्थिकत्वेन नातिदेशः। अग्नीषोमीयेन पशुना यजेतेति विपरिणते उत्पत्तिवाक्ये उपपदगतपश्वैकत्वस्य चातुर्थिकन्यायेन विवक्षिततया तत्प्रभवेषु हृदयाद्यङ्गेषु दाशमिकन्यायेन यागसाधनेषु तत्तदेकत्वस्य विवक्षिततया विधिसंस्पर्शेनार्थिकत्वाभावात्। न चातिदेश[देशा]बाधेनोपदेशवर्णनसम्भवे स युक्तः। उपदेशस्य तद्धितानन्तरमेकशेषेण प्रतिद्रव्यं सम्बन्धभेदेन यागभेदेऽप्युपपत्तेः। अतो द्रव्यगतसंख्यया द्रव्यदेवतासम्बन्धस्य तावत्त्वापादनेन कर्मणां यागानां भिदा भेदः ॥७॥

'अथैष ज्योतिरि'त्यत्रैतच्छब्देन प्रकृतज्योतिष्टोमपरामर्शात्प्रकृतहानाप्रकृतप्रक्रियाविशिष्टविध्यपूर्वान्तरादिकल्पनापरिहाराच्च तत्रैव सहस्रदक्षिणा गुणविधिरिति चेत् — **अथैष ज्योतिरित्यादौ तद्भेदो नामभेदतः**। अथेति प्रकृतविच्छेदात् ज्योतिरादिनामभेदात्तदर्थान्तरावगमात्तस्य वा एतेन यजेतेत्याख्यातसामानाधिकरण्येन यागत्वावगतेः। एतच्छब्दस्य प्रस्तूयमानपरत्वाद्दक्षिणाविधेः 'सहस्रदक्षिणेन यजेते'त्येतावतैवोपपत्तेरवैयर्थ्यात्तत्तन्नामककर्मत्रयं सहस्रदक्षिणाकं विधीयत इति ॥८॥

'सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमि'त्यत्र वैश्वदेवीपदेन द्रव्यदेवतासम्बन्धावगमात् वैश्वदेव्या यजेतेति यागकल्पनाच्छुद्धयज्यवगतं यागं गुणाननुरक्तं साकांक्षं योग्यञ्च प्रतिवाजिनमुत्पन्नशिष्टं वाजोऽन्नमामिक्षा येषां ते वाजिन इति पूर्वकर्मसम्बन्धिनो विश्वान् देवानुद्दिश्य नाभिधीयत इति द्रव्ययोर्विकल्पः। अत एकं कर्मेति चेत् — **गुणाद्वाजिनयागस्य त्वामिक्षायागतो भिदा**। शुद्धयजिसत्त्वेऽपि द्रव्यविशिष्टस्यैव तेन प्रतीतेः निराकांक्षत्वात्तद्वैश्वदेवमित्येतावतैव तच्छब्दस्य संस्कृतपयः परामर्शिनः। तत्त्वेनैव तु उपस्थापकतया द्रव्यविशेष-

देवतयोः सम्बन्धप्रतीत्या स्त्रीलिङ्गामिक्षापदयोर्नित्यानुवादत्वात् । 'वाजिभ्यो वाजिनमि'तिपदद्वयसमभिव्याहारात् वाजिवाजिनयोः सम्बन्धप्रतीत्या विलम्बितत्वात् । अश्वत्वे रूढस्य वाजिपदस्य योगाद्विश्वदेवानुपस्थापकत्वात् । 'अग्निर्वायुसूर्यस्ते वै वाजिन, छन्दांसि वै वाजिन' इति च वाजिशब्दस्य वाक्यशेषेऽर्थद्वयप्रतीतेश्च कथञ्चिदपि पूर्वकर्मणि निवेशमलभमानं वाजिनं स्वनिवेशाय कर्मान्तरं कल्पयतीति गुणाद् यागभेदः, प्राप्ते कर्मणि गुणद्वयविधानानुपपत्त्या गुणस्य भेदकत्वं पौर्णमास्यधिकरणे प्रसङ्गादुक्तम् ।।९।।

'दध्ना जुहोती'त्यादिवाक्यावगतदशद्रव्याणामेकाग्निहोत्रहोमसम्बन्धेऽष्टदोषदुष्टविकल्पापत्तेः । प्रथमप्रवृत्तवाक्यविहितद्रव्यावरुद्धेऽन्यस्यानिवेशाद्वा कर्मान्तराण्येव तैर्विधीयन्त इति चेत् —**न चाग्निहोत्रतो भिन्ना दधिहोमादयो मताः**। अन्योन्यानालोचनेन कर्मोत्पत्तिमालोच्य युगपत्सर्वप्रवृत्तेः प्रमाणवशाद् व्रीहियववद्विकल्पस्योपपत्तेश्च नाग्निहोत्रात् दधिहोमादयो भिन्नाः ।।१०।।

अग्निहोत्रं प्रकृत्य 'दध्नेन्द्रियकामस्य जुहुयादि'ति श्रुते प्रकृतहोमात्कर्मान्तरं दधिविशिष्टं फलाय विधीयते धातुपारार्थ्यवाक्यार्थविध्योः परिहाराय । समानपदोपात्तत्वप्रत्यासत्त्या तस्यैव भावनाकरणतया फलसाधनत्वात् । न च प्रकृतस्यैव फले विधानम्, दध्नेत्यस्य पाक्षिकानुवादत्वापत्तेः । न च तदवस्थस्यैव प्रकृतस्य विधानं वाक्यभेदापत्तेरिति चेत् — **दध्नेन्द्रियेतिकामाय गुणमात्रं विधीयते**। प्रकृतहानाप्रकृतप्रक्रियाविशिष्टविधिमत्वर्थलक्षणाविशेषणोत्पत्तिविधिविकल्पनादिदोषपरिहाराय प्रकृतहोमनिरूपितं दधिविशिष्टं करणकारकं फले विधीयते । दृष्टहोमव्यापारसम्बन्धमन्तरेण सिद्धरूपस्य तस्य फलजनकत्वस्य करणोपदेशवैयर्थ्यपरिहारस्य चालाभात् । फलभावनाकरणत्वं तु कारकशक्तेः यागादेरिव समभिव्याहारगम्यम्, धातुपारार्थ्यविप्रकृष्टविध्योश्चागत्या स्वीकार इति भावनामात्रस्य भेदो, न धात्वर्थस्येति ।।११।।

'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोम साम कृत्वा पशुकामो ह्येतेन यजेते'त्यत्र प्रकृतहानादिपरिहाराय पूर्ववाक्यविहिताग्निष्टुद् यागमाश्रित्य रेवत्यृगाधारवारवन्तीयं साम पशुफले विधीयते । साम्नः साक्षात् यागासाधनत्वेऽपि अग्निष्टोमस्तोत्रद्वारा तत्साधनत्वं तदभावेऽपि कृत्वेत्यस्य क्रियान्तरसापेक्ष-

तया तत्पूरणाय यागः सम्बध्यते । तदकारकस्यापि तदाश्रयत्वं प्रस्थायीय-दाक्षायणयज्ञसंस्थादीनामिवोपपन्नम् । रेवतीवारवन्तीयसम्बन्धस्य कृत्वा शब्द-कल्पितेन विध्यन्तरेण कल्पनान्न वाक्यभेदः । साम्नो यागसम्बन्धद्वारस्तोत्रा-न्तरसत्त्वेऽपि क्रत्वर्थवारवन्तीयस्याग्निष्टोमस्तोत्रद्वारकत्वात् फलार्थस्यापि तदेव द्वारमनुमीयते । एतच्छब्दः प्रकृताश्रयेण साम्नः फलार्थस्य सम्बन्धानुवादः श्रुतो गुणात्फलमिति चेत् — **कामाय रेवतीवाक्ये कर्मान्तरविधिर्भवेत्** । न ताव-त्स्तोत्रद्वारा साम्नः प्रकृतयागाश्रयत्वम् । प्रकृतक्रियानिरूपितकारकशक्तेरेव पूर्वाधिकरणे फलवत्त्वोक्तेः । साम्नश्च स्तोत्रद्वारापि यागकारकत्वाभावात् । द्वितीयान्तत्वाच्च वारवन्तीयमित्यस्य गीतिरूपस्य साम्नोर्दध्यादिवदाश्रया-काङ्क्षाभावाच्च । क्रत्वर्थवारवन्तीयदृष्टान्तेनाग्निष्टोमस्तोत्रद्वारत्वानुमानस्य धर्मेऽप्रमाणत्वाच्च । रेवतीषु वारवन्तीयं कृत्वा पशून् भावयेदिति फलभावना-पेक्षया क्त्वाप्रत्ययोपपत्तौ तदर्थमपि यागापेक्षाभावाच्च । अतो गुणफलसम्बन्ध-विधौ यजेतेति अग्निष्टोमसामे……प्राप्तानुवादत्वायोगाद्विधाने च वाक्यभेदा-दनर्थकं स्यादिति रेवतीवारवन्तीयविशिष्टो यागफले विधीयते । अग्निष्टोम-सामेति तु पूर्वयागात्प्रकृते प्राप्तस्यानुवादः । अतः कर्मान्तरं फले विधीयत इति ॥१२॥

ब्रह्मसामसंज्ञकं स्तोत्रं प्रकृत्य 'यो वृष्टिकामो, योऽन्नाद्यकामो, यः स्वर्ग-कामः स सौभरेण स्तुवीतेति' ब्रह्मसामनिरूपितं सौभरसंज्ञकसामविशिष्टं करण-कारकं वृष्ट्याादिफलत्रयं विधाय पुनः श्रूयते — 'हीषिति वृष्टिकामाय निधनं कुर्यात् 'उर्गित्यन्नाद्यकामाय' 'ऊ इति स्वर्गकामाये'ति । तत्र हीषादिनिधन-विशेषाः सौभरफलात्फलान्तरे वृष्टिकामादीनुद्दिश्य विधीयन्ते । तत्तत्फले विशेषसाधनसौभरेऽनियमप्राप्तहीषादिनियमविधौ वृष्टिकामादिशब्दानां फल-साधनसौभरलक्षकत्वं स्यात् । तथा च साधनद्वयमेलने प्रभूतं वृष्ट्यादि भव-

तीति चेत् — **हीषाद्या नियतास्तत्तत्फलार्थे साम्नि सौभरे ।** सिद्धरूपाणां हीषादीनां दध्यादिवदाश्रयाकाङ्क्षाणां प्रकृतस्तोत्राश्रयत्वस्यायोग्यत्वान्निधनस्य वा प्रकृतत्वात्तदाश्रयत्वे विधीयमाने तस्य फलसम्बन्धस्य च विधौ वाक्यभेदाद् वृष्टिकामादिशब्दलक्षिते सौभरे हीषादयोऽनियतप्राप्ता नियम्यन्ते ।

यद्वा वासिष्ठानां नाराशंसो द्वितीयः प्रयाज इतिवत्परम्परयापि तत्साधनत्वोपपत्तेर्न फलपदे साधनलक्षणापि । तस्माद्धीषादयो नियम्यन्ते ॥१३॥

॥ इति लघुवार्त्तिकटीकायां द्वितीयाध्यायस्य द्वितीयः पादः ॥

---

## तृतीयः पादः

'यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् गृह्णीयादि'त्यत्र रथन्तर-विशिष्टे क्रतौ निमित्ते ऐन्द्रवायवाग्रत्वमुच्यमानं प्रकृतज्योतिष्टोमस्य तद्विशिष्ट-त्वासम्भवात्कर्मान्तरमाक्षिपति । रथन्तरस्य क्रतुव्यापितया इतरद्व्यवच्छेद-कतया रक्तोत्पलमित्यत्रेव विशेषणत्वस्य वाच्यत्वात् । प्रकृतकर्मणि गायत्रादि-नाना साम्नां समावेशादिति चेत् — **न रथन्तरसामेति गुणात्कर्मान्तरं भवेत् ।** न विशेष्यव्याप्तिर्विशेषणे नियता । कुण्डलीत्यादौ सत्तामात्रेणापि दर्शनात् । नियतसत्ताकत्वे व्यवच्छेदकता । यथा पाण्डुरः शङ्ख इति । अत्र पृष्ठस्तोत्रे वैकल्पिकत्वाद् बृहद्रथन्तरयोः पाक्षिका असत्ताव्युदासो विशेषणफलम् । व्यवच्छेदकत्वेऽपि विरोधिबृहद्व्यवच्छेदकत्वं न गायत्रादेः रक्तत्वस्येव दीर्घत्वा-विरोधिनः । अतः प्रकृतस्यैव क्रतोस्तद्विशेषणत्वमिति रथन्तरविशिष्टक्रतु-निमित्तम् । क्रतुविशिष्टं रथन्तरं वा । कादाचित्कस्य निमित्तत्वसम्भवात् । अतो न रथन्तरगुणात्कर्मान्तरम् ॥१॥

राजसूये राजकर्तृकेऽवेष्टिर्नाम इष्टिः । 'आग्नेयमष्टाकपालं निर्वपतो'-त्यादिका श्रुता । तत्र श्रूयते 'यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधाय आहु-तिमाहुतिं हुत्वा तमभिघारयेत्' । 'यदि राजन्यः ऐन्द्रम्, यदि वैश्यो वैश्वदेव-मि'ति । तत्र त्रैवर्णिकानां प्राप्तानां निमित्तार्थानि श्रवणानि प्रजापालनादिकर्म-कर्त्तरि राजशब्दस्यार्यैः प्रयोगात् । आन्ध्राणां क्षत्रियत्वजातौ प्रयोगस्य पीलु-शब्दन्यायेन बाधात् । तस्य 'कर्मणी'त्यधिकारे 'पत्यन्तपुरोहितादिभ्यो यक्' इति पाणिनिसूत्रस्य साधुत्वान्वाख्यानपरतया शक्त्यग्राहकत्वात् । प्राप्तिद्योतक-यदिश्रुतिविरोधाच्च । अतो राज्यकर्तृणां प्राप्तत्वादनुवाद इति चेत् — **यदि ब्राह्मण इत्याद्यमवेष्टिप्रापकं वचः ।** ब्राह्मणवैश्ययोरिति शेषः । राजशब्दस्य क्षत्रियत्वे आन्ध्रप्रयोगात्तन्मूलकत्वाद् व्याकरणस्य । तत्र राजशब्दस्य पुरोहिता-

दिगणे पाठात्स्मृत्याचारयोर्विरोधे स्मृतेर्बलवत्त्वेनार्थप्रसिद्धेर्बाधात् । यदि शब्दस्य निपातत्वात् राजानमभिषेचयेदिति प्रयोगाच्च राजा यजेतेत्यत्राप्राप्तौ ब्राह्मण-वैश्यावित्यनुवादासम्भवात् तयोः ज्ञापकं वचनम् । 'एतया अन्नाद्यकामं याजये-दि'ति वचनं नेति कृत्वाचिन्तया इदम् ।।२।।

'वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्य' इति । तथा 'वसन्ते ब्राह्मणमुपनयीतेत्यादि' श्रुतम् । तत्र ब्राह्मणादिश्रवणं कालविधौ निमित्तार्थं 'यजेत स्वर्गकाम' इत्यादिक्रतुं विधिभिरग्निविद्यापेक्षिभिस्तत्साधनयोराधानाध्ययनयोराक्षिप्तत्वात् । अग्निष्वाधानसाध्यत्वस्य नक्तं गार्हपत्यमित्यादिगुणविधिभिरवगतेः । अध्ययनाङ्गत्वादुपनयनस्यापि । 'य एवं विद्वानग्निमाधत्ते' इति गुणानाकृष्टविधिवशाद्वा सर्वेषामाधानप्राप्ते कालनिमित्तार्थं ब्राह्मणादिश्रवणमिति चेत् — **वसन्तादिवचोऽप्येवमाधानप्रापकं मतम्** । आधानसाध्यत्वस्याग्निष्ववगमेऽपि अन्येनाहितानां क्रमादिनापि प्राप्तिसम्भवे नियतमाधानं नाक्षिपन्त्यग्नयः । लिखितपाठादिनापि विद्यासम्भवाच्च नाध्ययननियमः । सामान्यवचनस्य वर्त्तमानसरूपस्य स्पष्टविधिसत्त्वेन विधित्वकल्पनम् । तस्माद् ब्राह्मणादिकर्त्तृकस्य वसन्तादिकालविशिष्टस्य च विधानार्थं वसन्ते ब्राह्मण इत्यादिवाक्यम् । अतः प्रापकवचनमाधानोपनयनयोः ।।३।।

दर्शपूर्णमासप्रकरणे 'दाक्षायणयज्ञेन स्वर्गकामो यजेत', 'साकम्प्रस्थायीयेन यजेत पशुकाम' इति श्रुतयोर्न फलाय गुणविधानम् । तन्नामकगुणयोः लोके दध्यादिवदप्रसिद्धेः । अतोऽज्ञातार्थपदद्वयं यजिसामानाधिकरण्यात् यागनाम सत् प्रकृताद्भेदकम् । विधेयान्तराभावेन यागस्यैव विधिप्रतीतेरभ्यासादपि भेद इति चेत् — **स्याद्दाक्षायणयज्ञादौ गुणस्यैव फले विधिः** । लोके गुणवाचित्वेनाप्रसिद्धयोरपि अवयवप्रसिद्धिवाक्यशेषाभ्यां आवृत्तिसहप्रस्थानलक्षणगुणवाचित्वप्रतीतेस्तयोः प्रकृतयागसम्बन्धिनोर्दध्यादिवत्फले विधानमिति नैतत्संज्ञककर्मान्तरविधानं प्रकृतहानादिप्रसङ्गादिति ।।४।।

दर्शपूर्णमासयोः 'ईषामालभेतेति' विहितेषानुवादेन 'वायव्यं श्वेतमालभेते'त्यनारभ्य श्रुतेन श्वेतगुणो विधीयते । सम्बन्धसामान्यविहिततद्धितान्तेन वायव्यशब्देन वायुसृष्टत्वानुवादः । भूतिकामपदमपि सार्वकाम्यवाक्यप्राप्तफला-

नुवादकम् । नैवम् । फलपदस्य पाक्षिकानुवादत्वापत्तेः । दार्शपौर्णमासिकालम्भनैयत्याभावाच्च । अतः श्वेतद्रव्यालम्भमात्रं यावदुक्तं फले विधीयते । तथा तत्रैव 'चतुरो मुष्टीन्निर्वपतीति' विहितनिर्वापे 'सौर्यं चरुं निर्वपेदिति' चरुशब्दलक्षिता स्थाली आधारत्वेन विधीयते । द्वितीया च सप्तम्यर्थे सूर्यशब्देन गौण्या अग्न्यनुवादः । फलपदं च पूर्ववदनुवादः । अत्रापि वा यावदुक्तं कर्मफलाय विधीयत इति चेत् — **नालम्भे स्याद् गुणविधिर्वायव्यमिति दार्शिके ।** दार्शिकेऽऽलम्भे वायव्यमिति वाक्येन श्वेतगुणविधिः । तदीयनिर्वापेण स्थालीविधिरित्यपि द्रष्टव्यम् । वायव्यमिति देवतातद्धितेन द्रव्यदेवतयोः सम्बन्ध प्रतीत्या तदनुपपत्तिकल्पितस्य 'वायव्येन श्वेतपशुना यजेत भूतिकाम' इति फलाय विशिष्टयागस्य विधिसम्भवे न देवतापदवैयर्थ्यं युक्तम् । एवं चरुशब्दस्य ओदने रूढस्य सूर्यदेवतासम्बन्धे पूर्ववत्'सौर्येण चरुणा यजेत ब्रह्मवर्चसकाम' इत्युभयत्र फले विशिष्टयागविधिरिति ।।५।।

अग्निहोत्रे 'वत्समालभेते'ति श्रुते प्राणिद्रव्यकर्मकालभतिसामान्यात्पूर्ववद्यागविधिरिति चेत् — **अग्निहोत्रे विधिर्वत्समालभेतेति संस्कृतेः ।** संस्कृतेर्विधिरिति योजना । आलम्भः स्पर्शः । स च यागमन्तरेणाप्युपपन्नः । अतो वत्ससंस्कारार्थः सः । 'अतो वत्सनिकान्ता हि पशव' इति वाक्यशेषोपपत्तिः ।।६।।

अग्निचयने 'चरुमुपदधाति, बृहस्पतेर्वा एतदन्नं यन्नीवारा' इति बृहस्पतिदेवताचर्वोः सम्बन्धकल्पितयागविधिः । उपधानं स्विष्टकृदादिशेषकार्यं प्रत्याम्नानार्थमिति चेत् — **चरूपधानवचनं न यागस्य विधायकम् ।** षष्ठ्या देवतात्वबोधनेऽसामर्थ्यात् तैत्तिरीयकस्य 'बार्हस्पत्यो भवती'त्यस्य वर्त्तमानसरूपत्वाद् ह्यनपेक्षितस्य वाक्यशेषादग्रहणाच्च चरूपधानं स्थण्डिलनिर्वृ्त्यर्थतया कृतार्थं चरुकर्मकोपधानेन स्थण्डिलं भावयेदिति । अतो न यागविधिरिति ।।७।।

'त्वाष्ट्रं पात्नीवतमालभेतेति' प्रकृत्य 'पर्यग्निकृतं पात्नीवतमुत्सृजती'ति श्रुते पर्यग्निकृतं पात्नीवतं कुर्यादिति पूर्वस्मात्कर्मान्तरं विधीयते । पूर्वयागे पत्नीवत्त्वगुणस्य त्वष्टुर्देवतात्वान्न तद्द्वारा पूर्वकर्मप्रत्यभिज्ञानं तद्धितद्वय-

श्रवणेऽपि अग्नये पवमानायेत्यादिवत्परस्परनियमात् पूर्वकर्मणि विधेयगुणाभावाच्च 'न पर्यग्निकृतमुत्सृजती'ति व्यवहितान्वयः । पर्यग्निकरणान्ताङ्गकलापस्य च तस्मिन् प्रकृतित एव प्राप्तेरिति चेत् — **पर्यग्निकृतवाक्यं स्यात्त्वाष्ट्रे गुणविधायकम्** । उत्सृजतिना पूर्वयागमनूद्य पर्यग्निकरणान्ताङ्गकलापोऽतिदेशात्पूर्वं विधीयते, गृहमेधीयाज्यभागवत् । पात्नीवतपदं तु नित्यानुवाद इति न विशिष्टानुवाद द्व्येषः । अतो कर्मान्तरम् ॥८॥

'योऽदाभ्यं गृहीत्वा सोमाय यजते, योंऽशुं गृह्णातीति' चानारभ्य श्रुतयोरदाभ्यं यजत इत्यन्वयेन तन्नामकं कर्म विधीयते । तच्च भेदकं ज्योतिरादिवत् । अंशौ तु गृह्णातिसामान्यादग्निष्टोमविध्यन्ते प्राप्ते तदीयद्रव्यदेवतासङ्गत्या यागो भविष्यति । तत्तन्नामकग्रहणविधौ विनियोजकाभावाद् वैयर्थ्यं स्यादिति चेत् — **अंश्वदाभ्यग्रहगिरो न यागान्तरगोचराः** । अदाभ्यं गृहीत्वेत्यव्यवधानाद् गुणाकृष्टशक्तिकत्वात् । विशिष्टविधौ तु गौरवात् । अंशौ तु यज्यश्रवणाद् यागत्वानिश्चये यजितोऽतिदेशाप्रवृत्ते ग्रहणादेवातिदेशे प्रकृतिविकल्पापत्तेः । तैत्तिरीयके तत्तन्नामकग्रहणयोर्ज्योतिष्टोमे विनियोजकवचनद्वयस्य यस्यैवं विदुषेऽदाभ्यो गृह्यते भवत्यात्मना यस्यैवं विदुषोंऽशुर्गृह्यते ऋध्नोत्येवेति तत्प्रकरणे दर्शनात् ग्रहणनामनी । एतेन यागनामनी ॥९॥

'य एवं विद्वानग्निं चिनुते' इत्यनारभ्य श्रुतेऽग्निं कुर्यादिति । तन्नामकं कर्म विधीयते । चिनोतिपरप्रत्ययेन । धातुस्तु प्रत्ययानुग्रहार्थः । तस्य वा 'अथातोऽग्निमग्निष्टोमेनानुयजती'ति वाक्ये अग्निमनु अग्निष्टोमेन यजतीति यागस्यानुकरणात् । अग्नेरपि यागत्वम्, देवदत्तमनुगच्छतीतिवत् । तस्मादग्निसंज्ञकयागविधिरिति चेत् — **अग्निं चिनुत इत्यत्राप्येवं संस्कारगो विधिः** । अग्निशब्दस्य ज्वलनेऽत्यन्तरूढस्य वाक्यभेदादिनामत्वग्राहकाभावे तदयोगाद् वन्हेरेव चयनसंस्कारो विधीयते । चयननिर्वृत्तस्थण्डिलस्थापनेन अग्निं संस्कुर्यादिति ।

तस्य चाग्निष्टोमादौ विनियोजकान्यग्निप्रकरणगतानि । अथातोऽग्निमग्निष्टोमेनानुयजतीत्यादौ'नि संस्कृतेनाग्नावग्निष्टोमादिना कुर्यादित्यर्थः । तस्मात्संस्कारविधिः ॥१०॥

कुण्डपायिनामयनाख्यसम्वत्सरसत्रप्रकरणे "उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोति, मासं दर्शपूर्णमासाभ्यां यजेतेति श्रुते मासमुद्दिश्योपादीयमानमपि कर्म प्राप्तत्वान्न विधीयते । उद्देश्योऽपि मासोऽप्राप्तत्वाद्विधीयते । अविधीयमानस्य च कर्मणो न भेदः । अतस्तदनुवादेन मासगुणविधिरिति चेत् — **मासाग्निहोत्रं नित्यं स्याद्भिन्नं प्रकरणान्तरात्** । अनुपादेयसम्बन्धसचिवोऽसन्निधिः प्रकरणान्तरम्, ततो हेतोर्मासाग्निहोत्रं भिन्नं स्यात् । मासोद्देशेनोपादीयमानं कर्म असन्निधानान्न नित्याग्निहोत्रम् । तस्यैव सन्निधापकत्वे विधायकत्वे च वाक्यभेदः । अतएवात्र 'इष्टया पशुना सोमेन वा यजेते'ति सन्निधापितस्य सोमावास्यायां पौर्णमास्यां वा यजेतेति कालोद्देशेन सोमादेर्विधानेऽपि न कर्मभेदः । अग्निहोत्रं नाम यद्यपि दूरस्थमुपस्थापयति धात्वर्थं तथापि भावनायास्तेनानुपस्थापनाद्धात्वर्थस्यापि विधानयोग्यस्य पूर्वापरीभूतस्यानुपस्थापनान्मासगुणकमग्निहोत्रसधर्मकं कर्मान्तरं विधीयते । एवं सरस्वत्या दक्षिणेन तीरेणाग्नेयेन यजेत्यत्रापि अनुपादेयं देशमुद्दिश्योपादीयमानं कर्मान्तरं आग्नेयशब्दस्य नामत्वाभावाच्च । तथा सत्रायावगूर्य 'विश्वजिता यजेते'ति सत्रसङ्कल्पविच्छेदे श्रूयमाणे या एकाहकाण्डपठितविश्वजितो एवेति ॥११॥

'आग्नेयमष्टाकपालं निर्वपेद्रुक्काम' इति श्रुतेऽपि अनुपादेयं फलमुद्दियोपादीयमानकर्मासन्निधानात्पूर्ववद्भिन्नम् । तथा 'त्रैधातव्यादीक्षणीये'त्यश्वमेधे दीक्षणीयाशब्दलक्षिते दीक्षितसंस्कारे विधीयमानानुपादेयसंस्कार्यसम्बन्धात् काम्यत्रैधातव्याद्या असन्निधानाच्च कर्मान्तरं प्रकरणान्तरमन्यप्रकरणपठितत्वं फलसंस्कार्ययोः कर्मानुवादेनाहवनीयादेरिव विधेयत्वं वेति शङ्कापनुत्तये इदमधिकरणम् । असन्निधानमात्रस्यैवोपयुक्तत्वात् । विधेयस्याङ्गत्वापाताच्चेति । तदाह — **भिद्येत रुक्कामाग्नेयो दार्शिकाग्नेययागतः** । त्रैधातव्येत्यपि द्रष्टव्यम् ॥१२॥

दर्शपूर्णमासप्रकरणे 'समे दर्शपूर्णमासाभ्यां यजेत' 'पौर्णमास्यां पौर्णमास्या यजेते'ति श्रुते देशकालोद्देशेनोपादीयमानं सन्निहितमपि कर्म विधेयमेवेति विहितस्य विधानायोगात्कर्मान्तरमिति चेत् —**सान्निध्याद्देशकाद्यैर्न कर्मान्तरता भवेत्** । सन्निहितत्वेन प्रत्यभिज्ञायमानतया कर्म न विधीयते । उद्देश्यावपि

देशकालावप्राप्तौ विधीयेते। निमित्तमूलसंस्कारेषु 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' शेषात्स्विष्टकृते समवद्यती'ति श्रुतानां कर्मणामेव यद्यपि विधेयत्वम्, निमित्तादीनामविधेयत्वात्; तथापि निमित्तादिसम्बन्धित्वेन पुनर्विधानादुत्पत्तिविधिभेदे कर्मभेदात्प्रकृते च तदभावान्न भेदः। 'अग्नये स्विष्टकृते समवद्यती'ति विहितस्य शेषादिति पुनर्विधानं संस्कार्यशेषसम्बधार्थः ॥१३॥

दर्शपूर्णमासयोः कालद्वययुताग्नेः सन्निधौ 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां भवती'ति श्रुते अभ्यासात्कर्मान्तरविधिः। न च कालद्वययुजाग्नेययोरन्यतरस्यायमनुवादः। तत्रैवैतदनुवादेनापरविधानसम्भवे विनिगमनाविरहे कर्मान्तरस्यैव विधानौचित्यादिति चेत् — **कालद्वययुताग्नेयाद्भिद्यते नैककालयुक्।** प्रकृतप्रत्यभिज्ञा अबाधायैन्द्राग्नविधिशेषोयमनुवाद इति ॥१४॥

**इति लघुवार्त्तिकटीकायां द्वितीयाध्यायस्य तृतीयः पादः ॥**

---

## चतुर्थः पादः

दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'ति प्रकृत्य यावज्जीवमिति श्रुते प्रकरणानुग्रहाय काम्ययागाङ्गतया यावज्जीविकोऽभ्यासो विधीयत इति चेत् — **काम्यात्प्रयोगाद्दर्शादेर्नित्योऽसौ प्रविभिद्यते ।** यावज्जीवपदे काललक्षणाया यजिपदेऽभ्यासलक्षणायाश्च श्रुतिसम्भवे प्रकरणवशादनुपपत्तेः जीवने निमित्ते पुरुषस्य प्रत्यवायपरिहाराय काम्यप्रयोगाद्भिन्नो नित्यः प्रयोगो नियम्यत इति । एकस्यैव प्रयोगभेदः शाखाभेदेन श्रुतान्यग्निहोत्रदर्शपूर्णमासादीन्यभ्यास-प्रकरणान्तरगुणेभ्यो भिद्यन्ते । 'ऐन्द्राग्नमेकादशकपालमि'त्युत्पन्नस्यैन्द्राग्नं द्वादश-कपालमिति शाखान्तरश्रुतेनोत्पन्नशिष्टद्रव्यविधानायोगात् । [अत आह] **अग्नि-होत्रादिकं कर्म शाखाभेदान्न भिद्यते ।** अभ्यासादिहेतुभ्यः कर्मणो विधानमात्रं सिद्धयेन्न भेदः । विहितस्य विध्ययोगात्कर्मान्तरं वाच्यम् । इह त्वध्येतृभेदेन विहितस्यापि तदुपपन्नः, न भेदकत्वम् । एकादशकपालद्वादशकपालयोरुत्पत्ति-शिष्टयोर्विकल्पः ।

**।। इति लघुवार्त्तिकटीकायां द्वितीयाध्यायस्य चतुर्थः पादः ।।**

**।। समाप्तश्चाध्यायः ।।**

---

# अथ तृतीयोऽध्यायः

## प्रथमः पादः

शेषस्वरूपशेषपदप्रवृत्तिनिमित्तविनियोगतत्प्रकारतत्प्रमाणतद्बलाबलादिलक्षणार्थंप्रतिजानात् **शेषलक्षणमारभ्यमिति**। शेषपदप्रवृत्तिनिमित्तानिरूपणात्तद्वान् शेष इत्ययुक्तम् । तथाहि — न व्यापकत्वं शेषत्वम्, आग्नेयादीनां परस्परव्यापकत्वेनातिव्यापनात्। प्रयोज्यत्वस्य तुषोपवापाङ्गकपाले तदप्रयोज्येऽव्यापनात्। प्रधानत्वाभिमतविधिभिन्नविधिविधेयत्वमपि पूर्ववदतिव्यापकम्। विध्यन्तविहितं तदित्यपि न, अप्रधानात्पूर्वविहितेष्वव्यापनात् । नोपकारकत्वमपि तत् । प्रधानेष्वङ्गानामनुष्ठानोपकारकेष्वतिव्यापनादिति चेत्—**पारार्थ्यं शेषतोच्यते**। परोद्देशप्रवृत्तव्यापारविषयत्वं पारार्थ्यम्। तच्च शेषत्वमुच्यते। विधेरनुद्दिष्टफले पुरुषाप्रेरणात् । विध्युद्देशस्य शेषिणः फलतत्साधनान्यतरत्वनियमात्। तादृश्युद्देश्येऽभिधेयस्य श्रुत्यादिना विनियोगात् । विध्यन्यथानुपपत्तिसहकृतं श्रुत्यादिशेषत्वे प्रमाणमिति श्रुत्यादिगम्यं शेषत्वमुच्यते ।।२।।

यागफलयोर्न शेषत्वम्, प्रमाणाभावात् । उपकारकत्वमेव शेषत्वम्। तच्च दधिसोमादौ यागजनके प्रत्यक्षम् । आरुण्यादौ द्रव्यपरिच्छेदेन क्रयोपकारकत्वम् । अवघातादौ वैतुष्याद्युपकारजनकत्वं च प्रोक्षणादिषु श्रुतिप्रमाणगम्यं तत्। यजेतेत्यत्र तु एकपदश्रुत्या यागस्य भाव्यत्वावगमान्न फलशेषत्वम्। फलन्तु काम्यमानमुच्यते, नात्मार्थं परार्थं वेति । तथा स्वर्गकामस्य पुरुषस्यापि ननु शेषत्वमिति चेत् — **द्रव्यादिवत्कर्मफलपुरुषेष्वपि सा भवेत्।** सा शेषता पदश्रुत्यार्थश्रुत्या च। प्रत्यये श्रुते प्रत्ययश्रुतेर्बलीयस्त्वाद्विध्युदितभावनायाः पुरुषार्थभाव्यकत्वम् । पदश्रुत्या तु यागस्य। तत्करणत्वं फलस्य काम्यमानतानुपपत्त्या विधिश्रुत्यात्मनेपदेन बहुपुरुषशेषत्वम् । पुरुषस्य तु आख्यातेन क्रियां प्रति कर्त्तृतया उपादानात्तच्छेषत्वमिति ।।३।।

दर्शपूर्णमासयोर्निवापप्रोक्षणावघातादय औषधस्य, उत्पवनादय आज्यस्य, शाखाच्छेदादय सान्नाय्यस्य धर्माः श्रुताः । ते तत्तत्स्वरूपमात्रार्थत्वे वैयर्थ्यादपूर्वसाधनांशे विनियुज्यन्ते । फलापूर्वमेव तेषां प्रयोजकम् । अन्येषामफलत्वात् । ततश्च तत्साधननिवेशिनो धर्माः सर्वे सर्वत्र स्युः । उत्पत्त्यपूर्वाणां प्रयोजकत्वेऽपि प्रकरणाविशेषात्सर्वाणि सर्वस्य प्रयोजकानीति धर्मसङ्कर इति चेत् — **अवघाताद्यौषधादौ यथायोगं व्यवस्थितम्** । अवान्तरापूर्वाणामपि फलापूर्वद्वारा फलवत्त्वात् सन्निहितत्वाच्च । धर्माणां दृष्टार्थत्वाय चावान्तरापूर्वसाधननिवेशनः तत्तद्भेदात् यथायोगं व्यवतिष्ठन्त इति ।।४।।

दर्शपूर्णमासयोः स्फ्यश्च कपालानि चेत्युपक्रम्य 'एतानि वै दश यज्ञायुधानी'ति श्रुतम् । तथा 'स्फ्येनोद्धन्ति, 'कपालेषु श्रपयती'त्यादि । तत्रायुधशब्दस्य साधने प्रसिद्धत्वात् यज्ञसाधनानि गम्यमानानि साक्षादसम्भवादङ्गेष्ववतरन्ति । अविशेषात्सर्वक्रियासु योग्यतया सम्बध्यन्ते । उद्धननादिश्रवणं त्ववयुत्यानुवाद इति चेत् — **स्फ्यादिनोद्धननाद्येव** । अवहननानुद्धननादिवाक्यानां पाक्षिकानुवादत्वे नित्यवच्छ्रवणविरोधात् । विधायकान्येवैतानि । यज्ञायुधवाक्यं तु 'यज्ञायुधानि सम्भरती'ति विधिविषयसमर्पकतयोपयुक्तम् । तस्मात् स्फ्यादिभिरुद्धननाद्येव कर्त्तव्यमिति ।।५।।

ज्योतिष्टोमे 'अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणाती'ति श्रुते अरुणाशब्द आकृत्यधिकरणन्यायादरुणमात्रवाचकः । तस्य चामूर्त्तस्य क्रयेऽयोग्यत्वात्ततो भङ्क्त्वा कृत्स्नप्रकरणनिवेशः । गुणवाचिप्रातिपदिकेन प्राकरणिकानि करणद्रव्याणि । लक्षणया तु य शक्यार्थो गुणः, तत्परिच्छेदकत्वेन विधीयते । येन येन द्रव्येण किञ्चित् क्रियते तेन तेनारुणगुणकेनेति । ननु क्रय एव द्रव्यलक्षणया निवेशः स्यादिति चेत् । न । श्रुतद्रव्यावरुद्धे लक्षितद्रव्या न च स्यात् । पिङ्गाक्ष्येकहायनीशब्दयोर्यौगिकयोर्द्रव्ये शक्तत्वात् । पिङ्गाक्षीत्वगुणलाभायैकहायन्यामेव तत्, प्रतीतेः विशेष्यस्य पदान्तरलभ्यतया दण्डी प्रैषानितिवत् पिङ्गाक्षीत्वपरत्वात् विभक्तेः प्रकरणशक्त्यनुवादित्वात् । पिङ्गाक्षीत्वस्य द्रव्याश्रितस्य कारकशक्त्यन्वयात् । न चारुणापदेनैकहायन्येवलक्ष्यतामिति युक्तम् । शक्त्युपात्तस्य पूर्वमेव क्रियान्वयात् । गुणद्रव्यक्रियाणामेकवाक्यगततया मध्यवर्तिद्रव्यमादाय विरुद्धत्रिकद्वयापत्तेश्च । वाक्यान्तर-

विहितद्रव्यानुवादेन गुणविधाने नायं दोषः। तस्मात्कृत्स्ने प्राकरणिके अरुणिमा निविशत इति चेत् — **क्रय एवारुणो गुणः**। तृतीययोक्तं करणत्वं विदधदाख्यातं येन रूपेण गुणः क्रयसाधनत्वयोग्यः, तथैव विदधाति। द्रव्य-परिच्छेदद्वारा स योग्य इति। अरुणगुणपरिच्छिन्नेनेत्यर्थात्सम्पद्यते। इत्थमेक-वाक्यत्वसम्भवेन न वाक्यभङ्गो युक्तः। अन्यथा अरुणपदे वृत्तिद्वयविरोधः। एकपदे उद्देश्यविधेयसमर्पकत्वं च स्यात्। अतएव विभक्त्या प्राकरणिक-द्रव्योपसर्जनकं शक्तिं लक्षयित्वा उपसर्जनद्रव्ये गुणविधिरिति निरस्तम्। प्रथमभक्षस्त्र्यङ्गैरित्यादावयवभेदेऽपि तन्निषेधात्। गुणस्य विशेषणानन्वयाच्च। शक्त्युपसर्जनकद्रव्यलक्षणायामपि प्रथमदोषानिस्तारात्। तस्मात्क्रयभावनायां कारकद्वारा अरुणगुणसम्बन्धः ॥६॥

ज्योतिष्टोमे 'ग्रहं सम्मार्ष्टी'ति श्रुतः सम्मार्ग एकस्यैव पशुनेत्युपादेय-गतसंख्यावत् उद्देश्यगतसंख्याया अपि विवक्षितत्वादिति चेत् — **न विवक्ष्यं ग्रहैकत्वम्**। ग्रहप्रातिपदिकवाच्यजात्या सम्मार्गानन्वयात् व्यक्तिलक्षणायां तत्तद्ग्रहयागाभ्यासजन्यापूर्वसाधनविशेषमात्रमविशेषाद् वक्ष्यते। सम्बन्ध-तौल्यात्। तथा च सर्वस्य सम्मार्ग इति परिच्छेदेऽनपेक्षिता। परिच्छेदिका संख्या न विवक्ष्यते। विधीयमानापि सा ग्रहान्तरपरिसंख्यार्था स्यात्। एकमिदं वाक्यमप्राप्तं सम्मार्गं प्रापयति परिसञ्चष्टे वेत्ययुक्तम्। तथोद्देश्ययोर्द्रव्य-संख्ययोरेकक्रियया अवशीकारात्प्रत्येकं वाक्यपरिसमाप्तेर्ग्रहं सम्मृज्याद्, एकं सम्मृज्यादित्यावृत्तिः स्यादित्यविवक्षितमेकत्वम्। तथा ग्रहस्य सम्मृजे-र्वैतत् प्रधानं गुण एव वा। सर्वथा वाक्यभेदः स्यादित्युक्त वाक्यभेदप्रकारा अपि द्रष्टव्याः ॥७॥

अत्रैवोदाहरणे सम्मार्ष्टीत्युक्ते सोमावसेकनिर्हरणादिप्रयोजनः सम्मार्गः सोमपात्राणामिति निश्चिते कर्माकांक्षाभावात्। अविवक्षितं ग्रहत्वं यागैक्येना-पूर्वैक्यात्। तत्साधननिवेशी सः। साधनत्वविशेषाद् ग्रहेष्विव चमसेष्वपि स्यादिति चेत् — **ग्रहत्वं तु विवक्षितम्**। श्रुतकर्मसम्बन्धस्य वाक्यभेदादिदोष-रहितस्य सति सम्भवे नाधिकं कर्मग्रहणं युक्तम्। यागाभ्यासापूर्वाणां भिन्नत्वाद् वाच्यग्रहत्वसम्बन्धिसाधनविशेषो लक्षणीय इति ग्रहत्वविवक्षायां न चमसेषु सम्मार्गः ॥८॥

वाजपेये 'सप्तदशारत्निर्वाजपेयस्य यूपो भवती'ति श्रुते अव्यवहित-सम्बन्धलाभाय ग्रहाय च सप्तदशारत्निर्वाजपेयस्येति सम्बन्धे परिमाणस्य कर्मण्यसम्भवात् तत्सम्बन्धिषोडशिग्रहलक्षणोर्ध्वपात्रद्वारा सम्बध्यते। यूपशब्दोऽपि तस्यैव लक्षकः। अन्यथा वाजपेये शब्दे पशुलक्षणा स्यात्। सा च प्रधान-प्रकरणभङ्गात् मुख्यबाधाच्च। यूपशब्दलक्षणा तु जघन्या न दोषायेति चेत् — **साप्तदश्यमरत्नीनां पश्वङ्गं यूपगामि सत्**। वाजपेयस्य यूपः सप्तदशा-रत्निरिति सम्बन्धः। षष्ठ्यर्थो वाजपेययूपयोः पशुयागद्वारकोपकार्योपकार-कत्वलक्षणः परम्परासम्बन्धः। देवदत्तस्य नप्तेतिवत्। तथा च न कस्यापि श्रुतित्यागः। अन्यथा सन्निधिप्रकरणयोरनुग्रहाय यूपश्रुतिबाधः स्यात्। वाजपेय-पदन्तु नित्यानुवादः। प्रकरणादेव तत्सम्बन्धी यूप इत्यवगमात्। अतएव तैत्तिरीयाः सप्तदशारत्निर्यूपो भवतीति पठन्ति ॥६॥

दार्शपौर्णमासिकप्रयाजसमीपे 'अभिक्रामं जुहोती'ति श्रुतम्। अभिक्रम-णममूर्तं सन्निहितप्रयाजहोमकारकानर्हं सत् ततोऽविच्छिन्नं प्रयाजादिवत् प्रकरणिनाङ्गत्वेन गृहीतम्, सामर्थ्यात् कर्तृसंस्कारद्वारकं सत् कर्त्तुः प्रयोगा-ङ्गत्वात्तद्द्वारा कृत्स्नप्रयोगे निविशते। न चामूर्त्तस्य कर्त्तृद्वारा आरुण्यवत् प्रयाजे निवेश इति युक्तम्। आख्यातेन कर्त्तुरनभिधानादिति। नैवम्। अनभिहितोऽप्याख्यातात्प्रतीयते इति तद्द्वारा प्रयाजाङ्गमभिक्रमणमिति भाष्यकारः। वार्त्तिके तु क्रियासमभिव्याहारविहितणमुलन्तस्याभिक्राममित्यस्य जुहोतेर्विच्छेदशङ्काभावात्पूर्वपूर्वपक्षानुत्थानमित्यन्यथा वर्णितम्। होमानुवादेन विधीयमानमभिक्रमणं प्राकरणिकसर्वहोमानां बुद्धिस्थतया प्रयाजहोमसन्निधि-मनादृत्य सर्वहोमाङ्गम्। न चावान्तरप्रकरणेन प्रयाजाङ्गत्वं शङ्क्यम्। फल-वद्भावनोद्भूतकथंभावाकांक्षालक्षणस्य निष्फलप्रयाजादिष्वभावात्। भावे वा परस्पराङ्गत्वं सर्वेषामङ्गानां प्रसज्येत। अतो महाप्रकरणेन दर्शपूर्णमास-प्रयोगसम्बन्धिसर्वहोमाङ्गं तदिति चेत् — **अभिक्रमः प्रयाजाङ्गम्**। प्रयाजा-न्विधाय 'समानयत उपभृत' इत्यादिना प्रयाजधर्मान् विधाय 'अभिक्रामं जुहोती'त्युपक्रम्य प्रयाजानिष्ट्वा हवींष्यभिघारयतीत्यन्तं प्रयाजपरामर्शा-त्तावदन्तं प्रयाजावान्तरप्रकरणमित्यवगमात्। तन्मध्यपतितमभिक्रमणं तेषा-मेवाङ्गम्। अङ्गभावनानां प्रधानोपकारभाव्यकानां कथंभावाकांक्षत्वेऽपि अवा-

न्तरप्रकरणशून्येषु परस्पराङ्गत्वे मानाभावात्।[आवमा]अवदानादिसामान्याङ्गै-र्वाचनिकैस्तत्तदङ्गैश्च तत्तत्पूरणमिति महाप्रकरणेन सर्वाणि प्रधानाङ्गान्येव ।।१०।।

दर्शपूर्णमासयोः पञ्चदशसामिधेनीरन्वाहेति सामिधेनीर्विधाय तासां च त्रिः प्रथमामन्वाहेत्यादिना गुणं विधाय निविदो नाम मन्त्रा देवेद्धोमन्विद्ध इत्यादयो विहिताः। ततः काम्यसामिधेनीकल्पाः। एक विंशतिमनुब्रूयात्प्रतिष्ठा-कामस्येत्येवमादयः। तदनन्तरं यज्ञोपवीतमाम्नातम् — उपव्ययत इति। तदनन्तरमपि सामिधेनीनामेव वाचनिका गुणा विधास्यन्ते — अन्तरानूच्य-मित्यादयः। तत्र पूर्ववदवान्तरप्रकरणेन सामिधेन्यङ्गमुपवीतम्। निविदोऽपि वाचनिकाङ्गसन्दष्टत्वात् सामिधेन्यङ्गम्। काम्यसंख्याविधावप्याश्रयतयानुवर्त्तना-दनुवचनानामिति चेत् — **इष्टयङ्गमुपवीतकम्**। महाप्रकरणात्। निविदां लिंगादग्निसमिन्धनार्थतया प्रकरणेन सामिधेन्यङ्गत्वायोगेनासम्बन्धिपदव्य-वधानेऽवान्तरप्रकरणानुत्थानात्। निविदां तु नावान्तरप्रकरणम्। न वा सन्नि-धानमपीति न तदङ्गत्वाशङ्का। काम्यानुवचनानां नित्यानुवचनप्रकृतिकतयाति-देशप्राप्तैस्तदङ्गैरेव नैराकांक्ष्यात् नोपवीतग्राहित्वम्। निविद्व्यवहितनित्या-नुवचनस्याश्रयत्वायोगेन संख्यामात्रस्य फले विध्यसम्भवेऽनुवचनान्तरस्यैव संख्याविशिष्टस्य विधेयत्वात्। अन्तरानूच्यमिति विधास्यमानगुणानां दूरस्थानु-वादेन याज्यादिसाधारण्येनानुवचनत्वावच्छिन्ने वा विधानमिति न ततः सामि-धेनीप्रकरणानुवृत्तिशङ्का। अतो दर्शपूर्णमासाङ्गमुपवीतम् ।।११।।

आधानप्रकरणे वारणवैकङ्कतादीनि यज्ञपात्राणि 'वारणो यज्ञावचरो वैकङ्कतो यज्ञोवचर' इति विहितानि। तत्रैव प्रदेशान्तरे पवमानेष्टयोप्या-म्नाताः। अग्नये पवमानायेत्याद्याः। तत्र पात्राणि पवमानेष्टयङ्गानि अग्नि-संस्कारतया विहिताधानस्य सफलतया अफलानां पवमानहविषामाधानाङ्ग-त्वात्। पात्राणामपि प्रकरणेनाधानसम्बद्धानामानर्थक्यात्तदङ्गन्यायेन तदङ्गभूत-पवमानहोमेष्ववतारादिति चेत् — **पात्राणि सर्वयज्ञाङ्गम्**। अनारभ्याधीतवाक्या-तिरेकेणा[?]धानप्रकरणे पवमानेष्टिसन्निधौ 'यदाहवनीये जुहोती'ति वाक्य-मस्ति। तत्र सप्तमी तप्ते पयसीतिवत् द्वितीयार्थे। तथा च होमेनाहवनीयं भावयेदिति पवमानहोमानामप्यग्न्यर्थतया आनर्थक्यत्तदङ्गन्यायाभावे वाक्यात्-सर्वयज्ञाङ्गानीति भाष्यम्।

वार्त्तिके तु पवमानहविषामाधानार्थत्वेऽप्याधानप्रकरणभङ्गेन यज्ञावचर इति वाक्येनानुवाद्य सर्वदा अङ्गापूर्वार्थतया विधीयमानानि पात्राणि न पवमानपात्रविषयाणि । अनुवादस्य 'व्रीहिभिर्यजेते'त्यादि चेत् — सन्निहितगामित्वेऽपि पवमानयागाङ्गानां पात्रसन्निध्यभावेन यज्ञश्रुतेः सर्वयागविषयत्वात् । अतो नास्याधिकरणस्यापेक्षेत्युक्तम्, तदाह — **'वार्तिके नास्त्ययं नयः'** इति ।।१२।।

दर्शपूर्णमासयोराग्नेयसौम्याज्यभागक्रमेवृत्रघ्नपदवद् ऋग्द्वयमाम्नातम् । तयोरेकाग्नेयी, अपरा सौमी । तथा वृधन्वत्पदवद् ऋग्द्वयम् । तयोरेकाग्नेयी, अपरा सौमी । तत्रापरं वचनं वार्त्रघ्नी पौर्णमास्यामनूच्येते वृधन्वती अमावास्यायामिति । तत्र पौर्णमास्यमावास्याशब्दाभ्यां प्रधानत्रिकद्वयमनूद्याज्यभागक्रमाद् विच्छिद्य प्रधानाङ्गत्वेन ऋक्चतुष्टयं विधीयत इति चेत् — **स्याद्वार्त्रघ्नीवृधन्वत्योः कालभेदाद् व्यवस्थितिः** । वार्त्रघ्नीवृधन्वतीयुगलयोः लिङ्गक्रमाभ्यां पर्वणोराज्यभागयोरव्यवस्थया प्राप्तयोः पौर्णमास्यमावास्याकालभेदाद् व्यवस्था स्यात् । पौर्णमास्यमावास्याशब्दौ लक्षणीयत्रिकद्वयपरित्यागेन काले वर्त्तेते । कालस्य मन्त्रानपेक्षत्वेऽपि तदीयाज्यभागयोस्तद्द्वारा मन्त्रव्यवस्था फलिष्यति । अन्यथा प्रधानेषु सौम्ययुगलस्यात्यन्तासामर्थ्यं स्यात्, तेषु सोमदेवताभावात् । वार्त्रघ्नोभ्यां पौर्णमासीं भावयेदित्यादिक्रमेण विभक्तयर्थलक्षणया वाक्यीयविनियोगस्य लिङ्गाद् दुर्बलत्वादिति ।।१३।।

दर्शपूर्णमासयोः 'हस्ताववनेनिक्ते, उलपराजीं स्तृणाती'ति ज्योतिष्टोमे मुष्टीं करोति, वाचं यच्छति, दीक्षितमावेदयतीति श्रुतम् । तत्र हस्तावनेजनमुष्टीकरणवाग्यमानां हस्तादिसंस्कारद्वारा आनन्तर्यात् उलपराज्यास्तरणदीक्षितावेदनयोरङ्गत्वमिति चेत् — **कर्त्तव्यं सर्वकर्माङ्गं हस्तादेरवनेजनम्** । आदिपदमवनेजनपदेऽपि योज्यम् । हस्तादेरवनेजनादि लिङ्गप्रकरणाभ्यां सन्निधिबाधेन कर्त्तव्यं सर्वाङ्गम् ।।१४।।

दर्शपूर्णमासयोः 'आग्नेयं चतुर्द्धा करोती'ति श्रुतम् । चतुर्द्धाकरणं आग्नेयैन्द्राग्नाग्नीषोमीयाणां स्यात् । अग्निसम्बन्धाविशेषात् । सर्वत्राग्निकलिभ्यां ढगिति सम्बन्धसामान्ये ढक्स्मरणात् । देवतात्वमपि स्याद् द्वाभ्यां दीयमान-

स्यैकस्मा अपि दानादिति चेत् — आग्नेयस्यैव हविषश्चतुर्द्धाकरणं भवेत्। न तावदग्नीषोमीयादेराग्नेयत्वम्, सापेक्षे तद्धितवृत्त्ययोगात्। चतुर्द्धाकरणलक्षणार्थमाग्नेयपदं पूर्वप्रसिद्धिमालोचयद्विधिवाक्यावगतदेवतात्वसम्बन्धमेव वक्ति, नानवगतं सम्बन्धसामान्यमिति। आग्नेयस्यैव चतुर्द्धाकरणम्। शातपथमपि पुरोडाशं चतुर्द्धा करोतीति वाक्यं जातेरयोग्यत्वात्पुरोडाशपदेन लक्षणीयां यौगिकाग्नेयपदोक्तां व्यक्तिमेव गमयतीति तस्यैव चतुर्द्धाकरणमिति ।।१५।।

।। इति लघुवार्त्तिकटीकायां तृतीयाध्यायस्य प्रथमः पादः ।।

---

## द्वितीयः पादः

मन्त्राणां प्रयोगसमवाय्यर्थस्मरणेनोपकारकत्वं मन्त्राधिकरणसिद्धं गौण-मुख्यार्थसाधारणम् । अन्योपस्थित्यद्वारापदोपस्थाप्यो मुख्यः । अन्योपस्थितौ तद्गतसादृश्येन प्रतीयमानो गौणः । तदुभयस्मरणसामर्थ्यं मन्त्रेऽस्ति । तयोश्च स्मारकापेक्षेति प्रतिप्रधानं गुणावृत्तिन्यायेनोभयत्रापि मन्त्रविनियोग इति चेत् — **मन्त्राणां मुख्य एवार्थे विनियोगः प्रवक्ष्यते।** गौणे सदपि सामर्थ्य-मन्यासापेक्षतया विलम्बितप्रतीतिकं तत्तात्पर्यकत्वमपि । अग्निशब्दाज्ज्वलन-प्रतीतिवत् । माणवकस्य पदान्तरसमभिव्याहारं विना अप्रतीतेः । तथा वानपेक्षप्रथमावगतमुख्यशेषतया कृतार्थो मन्त्रो तान्यत्र गच्छति । अर्थोऽपि गौणो ध्यानादिनापि स्मृत्युपपत्तेर्न मन्त्रमाकांक्षतीति मुख्य एव विनियोगः ॥१॥

अग्निचयने 'निवेशनः सङ्गमन' 'इत्यैन्द्रचा गार्हपत्यमुपतिष्ठत' इत्यत्र मन्त्रे इन्द्रप्रकाशनसामर्थ्यस्य स्फुटत्वादसमर्थस्य गार्हपत्ये विनियोगा-योगात् । मन्त्रमुख्यार्थत्वानुरोधेन गार्हपत्यशब्दस्य यागसाधनत्वगुणयोगाद् गृहपतेर्यजमानस्यायमित्यवयवशक्त्या वा इन्द्र एव [?] वर्त्तनम् । द्वितीयया सप्तम्यर्थं लक्षयित्वा गार्हपत्ये छित्त्वेति वा उपान्मन्त्रकरण इति विहितात्मनेपदा-नुमिताभिधानक्रियायां सामर्थ्यादिन्द्रं सम्बद्धच तद्विशेषणोपस्थानक्रियायां वा गार्हपत्यः सम्बध्नीयः । गार्हपत्यमुपेत्यैन्द्रचेममभिदध्यादिति क्रमेण ब्राह्मणं नेयम् । अतो मुख्य एव मन्त्राणां विनियोग इति चेत्— **विनियोगस्तु वचना-दैन्द्रचा वै गार्हपत्यके ।** गौणे सामर्थ्यं तात्पर्यं पदान्यसापेक्षतया विलम्बित-प्रतीतिकमित्युक्तं पूर्वाधिकरणे । तदिह विनियोजकब्राह्मणस्य विधित्वप्रधानत्वा-प्राप्तार्थत्वैर्हेतुभिर्मुख्यार्थत्वम् । तद्विहितस्य मन्त्रस्य ब्राह्मणवशेनैव जघन्यार्थ-त्वम् । एवञ्च वचनाद् गौणोऽपि विनियोग इति गार्हपत्यार्थो मन्त्रः ॥२॥

दर्शपूर्णमासयोः 'हविष्कृदेहीति त्रिरबध्नन् समाह्वयती'ति श्रुते पूर्ववद्

ब्राह्मणस्य मुख्यार्थत्वानुरोधात् हविष्कृदेहीति त्रिरवहन्तीत्यन्वयः । आह्वयतिरपि अवयाते गौणो, जघन्यत्वात् । अन्यथा मुख्यावघातपदस्य काललक्षकता स्यात् । त्रिरितिमन्त्रपाठप्राप्तानुवादः । अतोऽवघाताङ्ग मन्त्र इति चेत् — **हविष्कृदेहि मन्त्रस्य नावघाताङ्गता भवेत् ।** हविष्कृदेहीत्याह्वयतीति लिङ्गविनियोगप्राप्तमन्त्राह्वानसम्बन्धानुवादेन त्रिरित्यनियमप्राप्तं त्रित्वं नियम्यते । मन्त्रपाठे क्वचित्सकृत् क्वचिद् द्विः क्वचित् त्रिरित्यनियमात् । हन्तिस्तु सहायाह्वानस्य, तत्कालत्वप्राप्तेः । तल्लक्षणार्थो नित्यानुवादः । इतिकरणविनियोगो वाक्यीयो लिङ्गाद् दुर्बल इत्याह्वाने एव मन्त्रः ।।३।।

ज्योतिष्टोमे 'उत्तिष्ठन्नन्वाहाग्नीदग्नीन् विहरे'ति । तथा 'व्रतं कृणुते'ति 'वाचं विसृजती'ति श्रुते अग्नीदिति मन्त्र उत्थाने अङ्गव्रतं कृणुतेति वाग्विसर्गे वचनवशादिति चेत् — **तथा विसर्जनोत्थाने जातमग्नीदिति द्वयोः ।** विसर्जनोत्थान इति द्वन्द्वैकवद्भावे नपुंसकं सप्तम्येकवचनं व्रतमग्नीदिति द्वयोर्मन्त्रयोः तथा नाङ्गत्वमित्यर्थः । पूर्ववदेकवाक्यविनियोगस्य लिङ्गविरोधेन बाधाल्लिङ्गप्राप्तविनियोगानुवादेन उत्थानकालो वाग्विसर्गकालश्चाप्राप्तो विधीयते ।।४।।

दर्शपूर्णमासयोः 'सूक्तवाकेन प्रस्तरं प्रहरती'त्यत्र सूक्तवाकपठनकाले प्रस्तरं प्रहरतीति प्राप्तप्रहरणानुवादेन कालविधिः । इष्टदेवताप्रकाशनेन कृतार्थस्य सूक्तवाकस्य स्रुग्धारणादिविनियुक्तप्रस्तरस्य च प्रयोजनानपेक्षत्वात् देवताविधायिमन्त्रस्य तदनपेक्षप्रहरणेऽसामर्थ्याच्च । अतो 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेते'तिवत् कालार्थः संयोग इति चेत् — **अङ्गता सूक्तवाकस्य प्रस्तरप्रहृतौ मता ।** सूक्तवाकेनेति तृतीयाश्रुत्या कृतप्रयोजनस्यापि प्रहरणाङ्गत्वबोधात् । श्रुतिविनियुक्तस्य स्वार्थसमवायकल्पकतया इष्टदेवतानां प्रस्तरस्य च प्रहरणद्वारा सम्बन्धे सति तत्त्यागपूर्वको होमो भविष्यतीति प्रकरणाङ्गं सूक्तवाकः ।।५।।

सूक्तवाकशब्दस्य कृत्स्नानुवाकवचनत्वेनाध्येतृप्रसिद्धेः कृत्स्नविनियोगे सति एकदेशनिष्कर्षे श्रुतिबाधापत्तेरनिष्टदेवतावाचिपदानामदृष्टार्थत्वेनापि

प्रयोगोपपत्तेः प्रधानावृत्तावङ्गावृत्तिन्यायेन पर्वद्वयेऽपि सम्पूर्णसूक्तवाकप्रयोग इति चेत् — **तस्य पर्वद्वये लिङ्गाद्विभज्य विनियोजनम्** । भवेदेवम्, यदि सूक्तवाकशब्दोऽनुवाके रूढः स्यात् । सुष्ठूक्तं वक्तीत्यवयवप्रसिद्धौ प्रोक्षणशब्द इव रूढचकल्पनात् । तथा च यस्मिन् प्रयोगे यावत्यो देवता इष्टास्तन्मात्रांशस्य निष्कृष्टप्रयोगः । अन्यथा दुरुक्तवाकता स्यादिति ॥६॥

ऐन्द्राग्नमेकादशकपालमित्यनारभ्य काम्येष्टयः क्रमेण समाम्नाताः । आध्वर्यवे तेनैव लिङ्गक्रमेण काम्ययाज्यानुवाक्याकाण्डसमाख्यातमि'न्द्राग्नी रोचनादिव' इत्यादि होत्रे समाम्नातम्, तत्र याज्यादिमन्त्राः अध्ययनविध्यध्यापितात्प्रयोजनाकांक्षिण स्वप्रकाश्यदेवताद्वारा तद्देवताकक्रत्वपूर्वमुपस्थापयन्तः क्रमसमाख्ये बाधित्वा लिङ्गात्तद्दैवत्यकर्ममात्राङ्गानीत्यैन्द्राग्न्यादिकर्ममात्रे विनियोग इति चेत्—**क्रमाद् याज्यानुवाक्यानामैन्द्राग्नादिषु सङ्गतिः** । भवेदेवम्, यदि मन्त्रप्रकाश्यदेवतायाः जुह्वादिवत् क्रत्वव्यभिचारः स्यात् । न त्वेतदस्ति । इन्द्रादीनां मन्त्रार्थवादादावन्यत्रापि विनियोगप्रतीतेः । अतः क्रत्वपूर्वोपस्थापकक्रमसमाख्यानुरोधेन काम्येष्टिष्वेव विनियोगः । यत्र लिङ्गमात्रस्य क्रत्वव्यभिचारस्तत्र केवलाल्लिङ्गादपि यथाक्रतु ज्ञातस्य क्रत्वनुष्ठाने स्वर्गादिफलककर्मणि शरीरातिरिक्तात्मज्ञानस्य चेति ॥७॥

ज्योतिष्टोमे आग्नेय्य ऋचः 'अग्नयो आयाहि वीतये' इत्याद्याः पठिताः । स्तोत्रादौ विनियुक्तास्ततः प्रदेशान्तरे 'आग्नेय्या आग्नीध्रमुपतिष्ठते' इति श्रुतम् । तत्र प्रकृताभिरप्रकृताभिर्वा आग्नीध्राग्निरुपस्थेयः । अग्निर्देवता अस्याः साग्नेयीत्यवयवयोगस्योभयसाधारणत्वात् । सा वैश्वदेवीत्यत्र तद्धितान्तर्गतसर्वनाम्ना तप्तपयसः सन्निधानान्न परामर्शनं युक्तम् । नात्र कस्याश्चित्तथा सन्निधानमस्ति । सत्त्वेऽपि वा तस्य स्तोत्रार्थत्वेन चरितार्थतया ऋचां नैराकाङ्क्ष्यात् । ऋगनुवादेन देवताविधौ हि अनुवादस्य सन्निहितगामितया अन्यार्थसन्निधानमपि उपयुज्येत । उपादीयते त्वाग्नेय्याग्नीध्रोपस्थानं प्रति, तत्र च न प्रकृतग्रहणनियतः । प्रकरणात्तद्ग्रहणे श्रुतिजनिता विशेषप्रत्ययबाधः स्यात् । तस्मात् यया कयाचिद् उपस्थानमिति चेत्—

**आ[1]ग्नेया प्रकृतैव स्यादग्निरुपस्थितौ।** आग्नीध्रोपस्थाने प्रकृतक्रत्वपूर्वव्यापार-रूपत्वमाग्नीध्रोपस्थानात्मकत्वं चेत्यस्ति रूपद्वयम् । तद्द्वयमपि शास्त्रादेव ज्ञातव्यम् । तयोः परस्परव्याप्त्यभावेनैकेन विहितेनेतरानाक्षेपात् । तत्र प्रकृतग्रहणे ऋचः प्रकरणपाठोऽनुपपत्त्या प्रकृतक्रत्वपूर्वव्यापारसाधनत्वावगतेः । अवगतेन विधिना अपेक्षितविशेषरूपमात्रं लाघवाद्विधीयते । अप्रकृतग्रहणे तु रूपद्वयमप्यनेनैव विधातव्यमिति गौरवम् । यद्यप्यवघातादिष्विव प्रकरणादपूर्वसाधनव्यापारात्मकत्वम्, अप्रकृतग्रहणेऽपि स्यात्, तथापि तस्य वाक्यादि-कल्पनाप्रणाल्या श्रुतिकल्पनया तादृशव्यापारात्मकत्वबोधकत्वमात्रं स्यात्; न तु विधायकत्वम् । अस्यैव तूभयरूपविधायकत्वमिति गौरवम् । एतदप्यङ्गीक्रियेत, यद्यन्या गतिरवघातादिष्विव न स्यात् । प्रकृतग्रहणेनैव गतिसम्भवादिति स्तोत्र-विनियोगमनालोच्याम्नातरूपमात्रस्य प्रकृतस्यैव मन्त्रस्य ग्रहणमिति ।।८।।

सोमे भक्षमन्त्रः श्रूयते — 'भक्षे हि मा विश' इत्यादिरनुवाकः । तत्र कश्चिदंशो भक्षं प्रतिपादयति । केचिदंशा ग्रहणावेक्षणसम्यग्जरणादि-प्रकाशकाः । तत्र भक्षानुवाकसमाख्यया कृत्स्नस्य भक्षणे विनियोगः। ननु ग्रहणादिप्रकाशकानां लिङ्गेन समाख्यां बाधित्वा तेष्वेव विनियोगः स्यात् । न स्यात् । अचोदितानां तेषामक्रत्वर्थतया तत्प्रकाशकमन्त्राणामपूर्वसम्बन्धेनान-र्थक्यापत्त्या लिङ्गस्याविनियोजकत्वे निर्विघ्नं समाख्या भक्षाङ्गताङ्गमयति । विशिष्टभक्षणप्रकाशने चास्ति सामर्थ्यम् । गृहीत्वा अवेक्ष्य सम्यग्जरणाय भक्षयामीति । तस्मात् वाक्यसमाख्याभ्यां कृत्स्नस्य भक्षे विनियोग इति चेत् — **लिङ्गैर्भक्षानुवाकस्य विभज्य विनियोजनम् ।** न तावद्ग्रहणादेरचोदना, चोदि-तभक्षानुपपत्तिकल्प्यस्यापि तेनैव विधिना चोदितत्वात् । तादृशभक्षद्वारा तेषामपि क्रत्वपूर्वसम्बन्धात् । तेषां वा स्मृतामननुष्ठेयतया वाक्यसमाख्ये वाधित्वा लिङ्गाद् विभज्य विनियोगः । सम्यग्जरणमपि विहितभक्षाङ्गतया आसनविशेषादिनानुष्ठेयमिति ।।९।।

अत्रैव 'वाग्जुषाणा सोमस्य तृप्यति'वत्यंशस्य तृप्तिप्रकाशकस्य पूर्ववत्तत्रैव विनियोग इति चेत् — **मन्द्राभिभूतिरित्यादेर्तृप्तौ विनियोज्यता ।** तस्या

---

१. "आग्नेयी प्रकृतैव स्यादाग्नीध्राग्नेरुपस्थितौ" इति मूलवार्त्तिकपाठः ।

अनुनिष्पादितत्वेन पुरुषेणाननुष्ठेयतया स्मारकापेक्षाभावात् । विशिष्टभक्ष-प्रकाशनेन भक्षप्रकाशकांशैकवाक्यतया तत्रैव विनियोगः ।।१०।।

भक्षमन्त्रे इन्द्रपीतस्येति श्रूयते। तत्र इन्द्रेण पीतस्येति तत्पुरुषः, सोमविशेषणम्, इन्द्रपीतस्य ते भक्षयामीति। पीतपदे स्वार्थलाभात् । न च समासस्येति सूत्रेणान्तोदात्तत्वप्राप्त्या अध्येतृप्रसिद्धस्वरविरोधः । "तृतीया कर्मणि" अर्थात् कर्मवाचके क्तान्ते परे तृतीयान्तं प्रकृत्या इत्यनेनाद्युदात्त-त्वसिद्धेः न बहुव्रीहिः सवनविशेषणम् । पदद्वयेऽप्यन्यपदार्थलक्षणापत्तेः। तथा चानैन्द्रप्रदानेभ्योऽसमर्थो मन्त्रो व्यावर्त्तत इति तेष्वमन्त्रको भक्षः।

यद्वा यागैक्येऽपि तद् भक्षाणां मित्रत्वेनेन्द्राय त्वा वसुमत इत्यादि-मन्त्राणामैन्द्रप्रदानविषयतया तद्वशात्सोमाभिषवादीनामपि तद्विषयतया सधर्म-कैन्द्रप्रदानविकाराः । अन्येऽधर्मका ग्रहास्ततो धर्मान् गृह्णन्ति । ततश्चेन्द्रपीत-स्येत्यस्य तत्तद्देवतापर ऊह इति चेत्—**अनैन्द्रेष्विन्द्रपीतस्य नैवोह विनिवर्त्तते।** इन्द्रपीतस्येत्यस्य नावमिकन्यायेनेन्द्राय दत्तस्येत्यर्थः। न च स्वरविरोधः। "क्तेच" इत्यत्र चतुर्थी त्वनुवर्त्तते। क्तान्ते परे चतुर्थ्यन्त प्रकृत्या इत्यनेनाद्युदात्तत्वसिद्धेः। न च भक्षणार्थोद्धृतस्य तस्मै दत्तत्वाद् हुताहुतसमुदायस्य च तत्त्वात् । तथा च पदद्वयलक्षणा तौल्येऽन्येषामपि मन्त्रवत्त्वाय बहुव्रीहिरेव। शक्तिरेव वा बहुव्रीहि-समासेनापि प्रकृतिविकृतिभावः प्रदानानाम्। 'सोमेन यजेते'ति लताविशिष्टतया विहितस्यैवाभ्यासत्वेन तत्संस्काराणामपि सर्वग्रहयागाभ्यासेषु समानविधान-त्वात् । इन्द्रलिङ्गानां मानग्रहणादिमन्त्राणामेव वानैन्द्रेभ्यो व्यावर्त्ततात् । तस्मात्सर्वग्रहाणां यथाश्रुतमन्त्रवत् भक्षणम् ।।११।।

द्वितीयपूर्वपक्षे स्थित्वा विचार्यते — ऐन्द्रेषु मैत्रावरुणादिचमसेषु हुतेष्व-भक्षितेषु सरोघेषु नरम्युन्नाय[?]मित्रावरुणादिभ्यो हुतं भक्ष्यते । तत्रेन्द्रो नोपलक्षणीयः। अभ्युन्नयनकाले देवताया अनिर्देशेन पूर्वशेषसहितस्यैव अकृत्वा चिन्ता स्फोरणाय । उन्नयनकाले तस्यानिर्देशेऽपि तस्य करिष्यमाणयागार्थ-त्वस्य स्फुटत्वात्पूर्वशेषस्य तत्त्वे मानाभावादनिवृत्तसम्बन्ध इन्द्रोप्युपल-क्षणीयः ।।१२।।

ऐन्द्रवायवादीनां शेषा आदित्यस्थालीमागत्य तत आग्रयणस्थालीमागच्छन्ति । आग्रयणाच्च पात्नीवत ग्रहः 'पात्नीवतमाग्रयणाद् गृह्णाती'ति वचनात् । तस्मिन् पात्नीवतभक्षे इन्द्रवाय्वादयोऽप्युपलक्षणीयाः । शेषसंसर्गात्पूर्वकालीनस्यैव पात्नीवतत्वेन तत्संसृष्टशेषे पूर्वदेवतासम्बन्धानपायादिति चेत् — **पात्नीवतग्रहेणेन्द्रवाय्वाद्या उपलक्षणम्** । पात्नीवतशेषभक्षणे इन्द्रवाय्वादयो नोपलक्षणीयाः । आग्रयणगृह्यमाणे पात्नीवतत्वनिर्देशेन शेषस्यापि ततो गृह्यमाणतया पात्नीवतत्वेन पूर्वसम्बन्धापायात् ॥१३॥

पात्नीवत एवाध्वर्यवो होममन्त्रः — अग्ना३इ पत्नीवान्त्सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहे'ति । तत्र मन्त्रात्त्वष्टुरपि पातृत्वेन देवतात्वप्रतीतेः, सोऽप्युपलक्षीय इति चेत् — **न त्वष्टा** । त्वष्टा नोपलक्षणीयः । सहभावस्य कार्यानन्वयेऽपि सहैव दशभिरित्यादौ दृष्टेः पानस्य चाप्रमाणकत्वात् उत्पत्तिवाक्ये पत्नीवत एव तद्धितेन निरपेक्षस्य देवतात्वाभिधानात् मन्त्रतस्तस्य प्राबल्यात् ॥१४॥

तत्रैव याज्यामन्त्रः । 'एभिरग्ने रथं याह्यर्वाङ्या नारथं वादिभवोन्ध्य स्वाः । पात्नीवत'स्त्रिशतं त्रींश्च देवाननुष्वधमावह मादयस्वेति, । तत्र पात्नीवतत्र्यस्त्रिंशस्येत्युपलक्षणम् । तेषां माद्यत्वश्रवणेन पत्नीवद्विशेषणकत्वेनच उत्पत्तौ पत्नीवतो देवता अस्येति बहुवचनवृत्तिः प्रमाणवशदिति चेत् — **तत्र त्रयस्त्रिशत्** । अग्नेः स्वद्रव्येण मादयितृत्वप्रतीतेस्तस्यैव देवतात्वम् । त्रयस्त्रिशतां पत्नीवत्त्वेऽपि यजमानदेवत्वेन माद्यत्वाश्रवणेनोत्पत्तौ बहुवचनान्तवृत्तौ मानाभावात् । पत्नीवतोऽग्नेरेव देवतात्वमिति तस्यैवोपलक्षणम् ॥१५॥

'सोमस्याग्ने वीही'ति मन्त्रवर्णादनुवषट्कारदेवता अग्निरुपलक्षणीय इति चेत् — **न देवोऽनुवषट्कृते** । प्रकृतौ सा नोपलक्षितेतीहापि नोपलक्षणीया ॥१६॥

अमन्त्रक भक्षणापूर्वपक्षे स्थित्वा चिन्ता । ऐन्द्राग्नशेषभक्षः·········समासो······तद्धिता समुदितस्य देवतात्वेन यजमानसङ्कल्पोद्देश्यत्वेऽपि मन्त्रावगत पाने निरपेक्षत्वसम्भवादिति चेत् — **निवृत्तिर्यद्यनैन्द्रेभ्यः तदैन्द्राग्नममन्त्रकम्** ।

यदीति कृत्वा चिन्तेत्यर्थः। देवताधिकरणन्यायात्पिबतेरविलक्षक[श]द्रव्यम्। तस्य च समुदितविषयत्वेन्द्रेण व्यपदेशानर्हत्वादमन्त्रकमैन्द्राग्नं भक्षणम् ॥१७॥

तत्रैव 'गायत्रच्छन्दस' इति श्रूयते। बहुव्रीहेः सोमप्रदानप्रधानत्वात् छन्दस्कमात्रवति प्रदाने मन्त्र इति चेत्—गायत्रच्छन्दस इति स्याच्छन्दोन्तरवत्यपि। तादृक् प्रदानाप्रसिद्धया·········मात्रेण सर्वत्र प्रदाने भक्ष्यमाणे भवति गायत्रच्छन्दस इति ॥१८॥

॥ इति लघुवार्त्तिकटीकायां तृतीयाध्यायस्य द्वितीयः पादः ॥

---

## तृतीयः पादः

ज्योतिष्टोमे प्रजापतिरकामयतेत्युपक्रम्य 'अग्नेर्ऋग्वेदो वायोर्यजुर्वेद आदित्यात्सामवेद' इत्युक्त्वोच्यते — 'उच्चैर्ऋचा क्रियते, उपांशु यजुषा, उच्चैः साम्ने'ति। तत्रोच्चैस्त्वादिकं मन्त्रस्यैव धर्मो, न तु वेदस्य, उपसंहारगतस्य ऋगादिशब्दस्याप्राप्तविषयप्रधानविध्युद्देशगतत्वेन प्राबल्यात्। उपक्रमगतस्यापि वेदशब्दस्य तद्विपरीततया दौर्बल्यात्। अतः ऋङ्मन्त्रो यस्मिन् कस्मिंश्चिद् वेदस्थित उच्चैः प्रयोक्तव्यः। एवमन्येऽपि मन्त्रा इति चेत् — **उच्चैस्त्वाद्या वेदधर्माः स्युरुपक्रमगौरवात्।** अर्थवादगतोऽपि वेदशब्दोनुपसञ्जातविरोधित्वात्। उपसञ्जातविरोधिनमृगादिशब्दं मुख्यार्थात् प्रच्याव्य वेदे लाक्षणिकत्वं नयति। उपक्रम एवैतदवगतं प्रजापतिः सृष्ट्वा अग्न्यादिसृष्टत्वेन वेदानां स्तवनात् तत्सम्बन्धिकिञ्चिद्विधित्सितमिति। तद्विशेषमात्रं विधितः प्राप्तव्यमिति प्राप्तार्थमृगादिपदं लक्षणां सहते। अन्यथोपक्रमोपसंहारयोरेकवाक्यत्वायोगादिति। ऋग्वेदविहितं कर्मोच्चैः कर्त्तव्यमित्यादिक्रमेण **वेदधर्माः स्वरविशेषाः** ॥१॥

याजुर्वैदिकस्याधानस्य सामवेदे वारवन्तीयं गायतीत्याद्यङ्गविधिः। तत्र वारवन्तीयादेरुच्चैस्त्वमेव धर्मः, निरपेक्षप्रतीतित्वात्, नोपांशुत्वं प्रधानधर्मः तद्विध्येकवाक्यतापेक्षत्वादिति चेत्—नैवं साङ्गाधानप्रयोगस्य। याजुर्वैदिकत्वेन सापेक्षस्याप्युपांशुत्वस्यैवानुष्ठानम्। अन्यथा प्रधानवैगुण्यादिति भाष्यम्। तत्तु अङ्गगुणविरोधे त्विति द्वादशाधिकरणेन पौनरुक्त्यात् रथन्तराद्यङ्गविधेरपि याजुर्वैदिकत्वादयुक्तमित्यन्यथा वार्त्तिके वर्णितम्। सामानि सामवेदोत्पन्नानि, विनियोजकानि याजुर्वैदिकानि। तत्रोत्पत्तिवेदस्वर उच्चैस्त्वं कर्त्तव्यम्। प्रथमत्वादनपेक्षित्वाच्चेति चेत् — **प्रधानवेदधर्माणो वेदान्तरगता गुणाः।** प्रयोज्यत्वेनावधारितस्य मन्त्रस्य स्वराकांक्षणात्, तस्य च विनियोजकवाक्याधीनतया तदीयमुपांशुत्वं कर्त्तव्यम्। तेन क्रियत इति व्यपदेशार्हत्वात् ॥२॥

यजुर्वेदे सामवेदे च ज्योतिष्टोमे आम्नातस्य क्व विधिः ? क्वानुवाद ? इत्यनवगमात् स्वरेऽप्यनियम इति चेत् — **स्यात्प्रधानविधिस्तत्र यत्र वेदेऽधिकाङ्गता ।** अधिकाङ्गत्वकर्मस्वरूपोपकारिद्रव्यदेवताविधानम्, तद् यजुर्वेद इति । तत्र विधिरन्यत्रानुवाद इति । तदीयोपांशुत्वनियमः ॥३॥

दर्शपूर्णमासयोः समिदादिप्रयाजाः श्रुताः । तेन तयोरङ्गानि प्रधानभावनायाः भाव्यकरणतदुत्पादकद्रव्यादिभिर्निराकांक्षत्वात् । प्रयाजानां च कर्मकरणार्थवादिकफलेन विश्वजिन्न्यायेन दर्शफलानुषङ्गेण वा निराकांक्षत्वात् परस्पराकांक्षालक्षणप्रकरणाभावात् श्रुत्यादित्रयाभावस्य च स्पष्टत्वादिति चेत्— **प्रयाजानां प्रकरणात् ।** अङ्गतेत्युत्तरेण सम्बन्धः । फलवद्भावनोद्भूतकथंभावाकांक्षाप्रकरणं 'यागेन स्वर्गं कुर्यादि'त्युक्ते करणस्य व्यापारविशेषाकाङ्क्षायां प्रयाजादिभिरुपकारसम्पादनं व्यापारविशेषत्वेन सम्बध्यते । न च यागानुष्ठानमेव संयोगानुकूलक्रियानुष्ठानवत्प्रकार इति शङ्क्यम् । कुठारसम्पादनस्यैव व्यापारतापत्त्योद्यमनादिवैयर्थ्यापातात् । तस्मात्प्रयाजादिव्यापारेणादृष्टद्वारा व्याप्रियमाणस्य प्रधानस्य फलसाधनत्वम् । एवञ्च प्रयाजादेरपि अपेक्षितप्रधानोपकारेण फलवत्त्वान्नार्थवादादिभिः फलकल्पनाक्लेश इति प्रकरणादङ्गत्वं प्रयाजादीनाम् ॥४॥

दर्शपूर्णमासयोः हुतानुमन्त्रणमन्त्रो'दब्धिरनामासी'त्युपांशुयाजक्रमे समाम्नातो लिङ्गप्रकरणाविशेषात्सर्वार्थ इति चेत् — **दब्धेस्तु क्रमतोऽङ्गता ।** क्रमसमाम्नातयोर्मन्त्रकर्मणोः स्थानसामान्यादन्यतरदर्शनेऽन्यतरोपस्थितिनियमः परस्परं सम्बन्धार्थ इत्याकांक्षादिकल्पनाक्रमेण श्रुतिकल्पनयोपांशुयाजशेषत्वप्रत्ययाल्लिङ्गप्रकरणयोरपि तावतैव चरितार्थत्वम् । देशसामान्यरुपक्रमो द्विविधः — पाठसादेश्यमनुष्ठानसादेश्यञ्चेति । पाठसादेश्यमपि यथासंख्याम्नानं सन्निध्याम्नानं चेति द्विविधम् । तत्र दब्धिर्मन्त्रः प्रथमस्योदाहरणम् । सान्नाय्यपात्रशुन्धनसन्निधौ शुन्धध्वमिति मन्त्रो द्वितीयस्य । अनुष्ठानसादेश्यस्य तु अग्नीषोमीयपशुधर्मा इति वक्ष्यते ॥५॥

दर्शपूर्णमासादिषु आध्वर्यवहोत्रौद्गात्रादिसमाख्याताः पदार्थाः साम-

र्थ्यलक्षणाल्लिङ्गात्सर्वे सर्वैः कर्त्तव्याः । आख्यायाः पदमात्रत्वेनाप्रमाणत्वादिति चेत् — **कर्त्तारोऽध्वर्युहोत्राद्याः नियम्यन्ते समाख्यया ।** अपौरुषेय्या समाख्यया कर्त्तृविशिष्टपदार्थाभिधानाद् वैशिष्ट्यस्य च पदार्थापेक्षानुरोधेन कर्त्तॄणां कार्याकांक्षया च क्रियाकर्त्तृभावरूपे पर्यवसानाद् यौगिकानां सम्बन्धावाचकत्वेऽपि तस्य गम्यमानत्वात्तस्य च प्रयोगविधिना विधानात् समाख्यया परस्परनियम इति ॥६॥

'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इत्यत्र तृतीयाश्रुत्या ऋचः शेषत्वम् । द्वितीयया च गार्हपत्यस्य शेषित्वमिति । श्रौतोऽयं शेषशेषित्वबोधः । मन्त्रस्थेनेन्द्रपदेनेन्द्रप्रतीतिमात्रस्येन्द्रशेषत्वप्रत्ययः । इन्द्रप्रतीत्यननुपपत्त्या तच्छेषत्वं मन्त्रस्य कल्प्यमिति लैङ्गिकोऽयं विनियोगः । यद्यपि केवलश्रुत्या पदार्थान्तरनिरूपितं शेषत्वं शेषित्वं वा न बोध्यत इत्यस्ति तदंशे वाक्यापेक्षा; तथापि शेषशेषिभाववाक्यस्य व्यापाराच्छ्रौत एवायं विनियोगः । तत्र द्वयोरेकमन्त्रसमवाये लिङ्गं बलवत् सामर्थ्यापेक्षत्वाश्रुतेपीति चेत् — न । गौणसामर्थ्यस्य गार्हपत्ये सत्त्वात् । नापि मन्त्रस्योभयत्रविकल्पः । विरोधाभावेन प्रतिप्रधानं गुणावृत्तिन्यायेन समुच्चयोपपत्तेरिति चेत् — **श्रुतेर्लिङ्गाद्दुर्बलत्वं** प्रपद्यत इत्युत्तरेण सम्बन्धः । न तावच्छ्रुतिलिङ्गयोरविरोधः । येनोभयत्र मन्त्रस्य समुच्चयः स्यात् । निरपेक्षश्रुत्या गार्हपत्योपस्थानशेषत्वे मन्त्रस्य प्रथममवगते मन्त्रादर्थं बुध्वा तत्प्रतीतिः तदनु सामर्थ्यं च तस्मिन्नालोच्य मन्त्राकांक्षावशेनेन्द्रोपस्थानशेषत्वबोधकश्रुतिकल्पनया विलम्बेन विनियोजकं लिङ्गं मन्त्रप्रयोजनाकांक्षालक्षणमूलस्य श्रुत्या निराकृतत्वाच्छ्रुतिकल्पनायामसमर्थं सद् बाध्यत इति गार्हपत्योपस्थान एव श्रुत्या मन्त्रविनियोगः ॥७॥

'स्योनं ते सदनं कृणोमि, घृतस्य धारया सुशेवं कल्पयामि । तस्मिन् सीदामृते प्रतितिष्ठ, व्रीहीणां मेध सुमनस्यमान' इत्यत्र समभिव्याहृतपदानामेकवाक्यत्वस्वारस्येन 'तस्मिन् सीद' इत्यस्य पूर्वसापेक्षत्वेन च सम्पूर्णो मन्त्रः सदनकरणपुरोडाशप्रतिष्ठापनयोरावृत्त्या प्रयुज्यते ।

यद्वा लिङ्गवाक्ययोः साक्षाच्छ्रुतिकल्पकत्वेन तुल्यबलत्वात् सम्पूर्णो विभक्तो वा प्रयुज्यत इति चेत् — **ततो वाक्यम् ।** ततो लिङ्गाद् वाक्यस्य

दुर्बलत्वं प्रपद्यते । 'स्योनं त' इति पूर्वार्द्धस्यान्यानपेक्षं सदनकरणप्रकाशकत्वम् । तस्मिन् सीदेत्याद्युत्तरार्द्धस्यापीतरनिरपेक्षं पुरोडाशप्रतिष्ठापनसामर्थ्यमिति । ततो झटिति तत्तदर्थे विनियोक्त्री श्रुतिः कल्प्यते । द्वयोरेकवाक्यत्वे उत्तरार्द्धस्य सदनकरणसामर्थ्यं पूर्वेणैकवाक्यत्ववशेन कल्पयित्वा श्रुतिकल्पनम् । एवमितरस्येतरत्रेति विप्रकर्षाल्लिङ्गबलीयस्त्वेनोभयत्र विभज्यैव विनियोगः ॥८॥

सूक्तवाके 'अग्नीषोमाविदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताम्, इन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्रातामि'ति श्रुते इदं हविरजुषेतामिति शेषद्वयं तत्तद्देवतापदाद् भङ्क्त्वा प्रकरणेन पर्वद्वयेऽपि प्रयोक्तव्यम् । यद्यपि सन्निपाती सूक्तवाकः श्रुतिलिङ्गाभ्यां प्रहरणेष्टदेवताप्रकाशनयोर्विनियोगात्तथाप्यवघातादिवत्प्रकरणग्रहणमविरुद्धम् । न च वाक्यबलीयस्त्वम् । प्रधानाकांक्षात्मप्रकरणस्य प्रधानार्थत्वापादकतया बलवत्त्वादिति चेत् — ततः प्रकरणं तथा । तत्तद्देवतापदैकवाक्यत्वं शेषयोः प्रत्यक्षम् । अन्यशेषस्य स्वशेषपरिपूर्णेनापरेणैकवाक्यत्वमप्रत्यक्षमेव प्रकरणात्कल्प्यमिति विप्रकर्षाद्वाक्येन सामर्थ्यादिकल्पनस्य शैघ्र्यात्तेन प्रकरणबाधः ॥९॥

राजसूयेऽभिषेचनीयसन्निधौ विदेवनादयः समाम्नाताः । तेषां सन्निधिप्रकरणाभ्यामभिषेचनीये राजसूये चाङ्गत्वम्, नाकाङ्क्षामात्रं सम्बन्धकारणम् । गिरिर्भुक्तमग्निमानित्यत्रापि गिर्यग्निमत्पदयोः सम्बन्धापत्तेः । नापि सन्निधिमात्रम्, अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यत्र राजपदस्य पुरुषपदेनाप्यन्वयापत्तेः । अत उभयं परस्परापेक्षं उभयताङ्गतां गमयतीति चेत्— ततः स्थानम् । आकांक्षात एकवाक्यतादिकल्पनेन श्रुतिकल्पना शीघ्रा । सन्निधिपाठानुपपत्त्या आकाङ्क्षां परिकल्प्य वाक्यादिक्रमेण तत्कल्पना मन्थरेति सन्निधिबाधः । यद्यपीष्टिपशुसोमानां विकृतित्वात् प्राकृताङ्गैर्नैराकांक्ष्यम्, तथापि राजसूयात्मना सास्त्येवेति प्रकरणा[?]स्तिना ॥१०॥

पौरोडाशिककाण्डे समाख्याते सान्नाय्यपात्रं शुन्धनक्रमे 'शुन्धत्वमिति' मन्त्रः पठितः । समाख्यया सम्बन्धवाचिन्या लिङ्गाच्च पुरोडाशपात्रशुन्धनाङ्गमिति चेत् — ततोऽप्याख्या दुर्बलत्वं प्रपद्यते । ततः स्थानात् । समाख्या हि न सम्बन्धवाचिनी ।

पाकं तु पचिरेवाह कर्त्तार प्रत्ययोऽप्यकः ।
पाकयुक्तः पुनः कर्त्ता वाच्यो नैकस्य कस्यचित् ॥

इत्यभियुक्तोक्तेः वाचकत्वेऽपि पदमात्रस्याप्रमाणत्वात् । अतः सम्बन्धवाचिसमाख्योपलम्भात् सम्बन्धं सामान्यतः परिकल्प्याकाङ्क्षादिकल्पनाक्रमेण श्रुतिकल्पना विकृष्यते । क्रमे तु सम्बन्धस्य प्रत्यक्षप्रमितत्वादाकांक्षादिकल्पनाक्रमेण सन्निकृष्यते सेति । तेन समाख्याबाधः । एवं श्रुत्यादीनां पूर्वपूर्वेणोत्तरोत्तरस्याप्राप्तबाधः । श्रुतिवाक्यविरोधे 'अरुणया पिङ्गाक्ष्या क्रीणाती'त्युदाहरणम् । श्रुतिप्रकरणविरोधे 'एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्येति' । श्रुतिक्रमविरोधे रशनाधर्माणां त्रिवृद्भवन्तीत्यादीनां क्रमात्पशुयागाङ्गत्वमाप्तौ 'रशनया यूपं परिव्ययती'ति श्रुत्या यूपाङ्गत्वम् । श्रुतिसमाख्ययोर्विरोधे पौरोडाशिककाण्डसमाख्यातस्येषे त्वेत्यस्येति करणश्रुत्या शाखाच्छेदाङ्गत्वम् । इतिकरणस्य वाक्यीयत्वेऽप्यभ्युगमेनोक्तम् । लिङ्गप्रकरणविरोधे पूषानुमन्त्रणादिः । लिङ्गक्रमविरोधेऽनुज्ञानुज्ञापनमन्त्रौ । लिङ्गसमाख्याविरोधे भक्षानुवादे प्रहरणादिवाक्यादि । वाक्यक्रमविरोधे 'परिवीरसि परिवीत आगादि'त्यनयोः क्रमादग्नीषोमीयाङ्गत्वप्राप्ताविति पदैकवाक्यतया सवनीययूपपरिव्याणेऽपि प्राप्तिः । वाक्यसमाख्ययोर्विरोधे भक्षानुवाके समाख्यादिपदैकवाक्यत्वात् । अश्विनोरित्यादीनामवेक्षणादौ विनियोगः । प्रकरणसमाख्याविरोधे पौरोडाशिककाण्डसमाख्यातब्राह्मणविहितानां प्रयाजादीनां प्रकरणात्सान्नाय्योपांशुयाजार्थत्वमपि । ननु तत्र तत्र शास्त्रप्रदेशेषु प्राकृतस्य वैकृतेन बाधः, सामान्यस्य विशेषेण । श्रुत्या लिङ्गस्येत्यादिः प्राप्तबाधोऽप्राप्तबाधो वा । न चरमः । प्रापकचोदकसामान्यशास्त्रादेः सत्त्वात् । नाद्यः । लिङ्गादिना श्रुतिकल्पनातः पूर्वमेव श्रुत्या विनियोगादत आह — **प्रसत्त्या युज्यते प्राप्तावप्राप्तावपि बाधनम्** । प्राप्तौ सत्यां बाधनं प्रसत्त्या युज्यते । अप्राप्तावपि श्रुत्यादिना लिङ्गादीनां बाधनं नैकरूप्यमित्यर्थः ॥११॥

ज्योतिष्टोमे 'तिस्र एव साह्नस्योपसदो द्वादशाहीनस्येति' श्रुतेऽन्हा समाप्यमानस्य त्र्युपसत्त्ववत् । तस्यैव द्वादशोपसत्तापि प्रकरणाद्विकल्पेन विधीयते । अहीनश्रुतिश्च न हीनो अहीन इति सर्वाभिर्विकृतिभिरहीनो परित्यक्तः । प्रकृतितया ज्योतिष्टोम इति प्रकृत एव वर्त्तत इति चेत् — **उपसद्द्वादशत्वं**

**स्यादहीनक्रतुगोचरम्** । प्रकृतगामित्वे साह्नस्याहीनस्येति च विभागो व्यर्थः स्यात् । 'अहीनश्रुतिश्च 'अह्नः ख क्रतुसमूहे' इति विहितखप्रत्ययान्ततया मध्योदात्तत्वेन गम्यमानाहर्गणे रूढिं गमयति । सा च योगाद्बलीयसीति द्वादशाहप्रकरणविहितद्वादशोपसत्तानुवादेन त्र्युपसत्ता स्तुतिपरम् । द्वादशाहीनस्येति न द्वादशोपसत्ताविधिः, परं प्रकृतौ विकृतौ वेति ।।१२।।

ज्योतिष्टोमे 'युवं हि स्थ स्वर्पतीति' द्वयोर्यजमानयोः प्रतिपदं कुर्यादित्यादि श्रुतम् । प्रतिपन्नाम बहिष्पवमानस्तोत्रस्याद्या ऋक् । इदं विधानं न प्रकरणाद् उत्क्रष्टव्यम् । नित्यप्रयोगे यथाशक्त्युपबन्धस्य षष्ठे वक्ष्यमाणतया एकेन करणाशक्तौ द्वाभ्यां बहुभिर्वा प्रकृतस्यैवैकत्वबाधेनानुष्ठानसम्भवादिति चेत् — **'युवं हि स्थः स्व'** रित्यस्योत्कर्षो द्वियजमानके यथाशक्ति प्रयोगः । उपादेयाङ्गदक्षिणादिविषयः कर्त्तुरुपादेयत्वेऽपि तदेकत्वमनुपादेयं कालवदिति मीमांसकोद्घोषः । अतः प्रकृते निवेशात् कुलायाहीनादिषु द्विबहुकर्तृकेषूत्कर्षः । पत्न्यभिप्रायत्वे विरूपैकशेषस्य कारकद्वयप्रतीतिबाधस्य च प्रसङ्गात् ।।१३।।

दर्शपूर्णमासयोः 'जान्घया पत्नीः संयाजयन्ती'ति श्रुतम् । सामवायिकाङ्गत्वलाभाय जाघनीशब्दस्योत्तरार्द्धादिशब्दस्येवैकदेशद्रव्यवचनतया विद्यमानद्रव्यैकदेशविषयत्वेन च हृदयाद्यर्थलिध्वपश्वनुनिष्पन्नजाघनीसंस्कारकतया विनियोगभङ्गेन पत्नीसंयाजाः विधीयन्त इति प्रकरणभङ्गात् पशावुत्कृष्यते वाक्यमिति चेत् — **'उत्कर्षो नास्ति जाघन्याः'** । तृतीयया द्रव्यापेक्षपत्नीसंयाजान् प्रतिगुणत्वेन विधीयमाना न संस्कार्या स्यात् । अवयवविशेषस्य जाघन्याः मुण्डादिवत्सूनायामुपलम्भात् नैकदेशद्रव्यत्वम् । अत आज्येन विकल्प्यते जाघनी पत्नीसंयाजेषु ।।१४।।

ज्योतिष्टोमेऽधिषवणफलके प्रकृत्य 'न संतृणत्त्यसंतृण्णे हि हनू' इत्यसन्तर्दनं विधाय पुनः श्रुतम् दीर्घसोमे संतृद्येद्धृत्या इति । तत्र इष्ट्याद्यपेक्षया प्रकृतस्यापि दीर्घत्वादनुत्कर्षः । न च दीर्घस्य यजमानस्य सोम इति युक्तम् । कर्मधारयस्य बलीयस्त्वात् । धृत्या इत्यर्थवादासामञ्जस्याच्च । अतः सन्तर्दनासन्तर्दनयोर्ग्रहणवद्विकल्प इति चेत् — **कर्षः सन्तर्दनस्य तु** । इष्ट्याद्यपेक्षया दीर्घत्वस्याव्यावर्त्तकतया वैयर्थ्यात् । प्रकृतसोमापेक्षया दीर्घेषू-

क्थ्याहीनादिषूत्कर्षः। संस्थास्वपि त्रिपर्वणः सोमस्य दीर्घपर्वग्रहणेन व [?] शूपग्रहणेन च प्रदानविवृद्धये प्रदेयविवृद्धेरावश्यकत्वेन धृत्या इत्यर्थवादसामञ्जस्यस्य तौल्यादिति ॥१५॥

यत्'प्रवर्ग्यं प्रवृणक्ती'ति अनारभ्याधीतः प्रवर्ग्यः 'पुरस्तादुपसदां प्रवर्ग्यं प्रवृणक्तीति' प्रवर्ग्यसन्निध्याम्नातो नाव्यभिचरितः। क्रतुसम्बद्धोपसदुपस्थापितज्योतिष्टोमाङ्गम्। तत्र श्रूयते — 'न प्रथमयज्ञे प्रवृञ्ज्यादि'ति। अयं प्रतिषेधः प्रथमयज्ञाङ्गम्, प्रथमयज्ञश्च 'एष वा व प्रथमो यज्ञो यज्ञानामि'ति वचनादग्निष्टोमः। स हि प्रथमं प्रयुज्यते, य एतेनानिष्ट्वेति वचनात्। तस्माद्वाक्यादग्निष्टोमाङ्गं प्रतिषेध इति चेत् — **भवेदाद्यप्रयोगाङ्गं प्रवृञ्जननिषेधनम्।** प्रथमशब्दस्याप्रवृत्तपूर्वस्य कर्त्तुराद्यप्रवर्त्तनवाचितया प्रयोगद्वारा लक्षणया क्रतौ वृत्तेरिह लाक्षणिकस्याग्रहणादेष वा वेत्यस्यार्थवादतया शक्त्यग्राहकत्वात् यज्ञशब्दस्य जघन्यतया प्रयोगलक्षणायामर्थदोषात्। प्रथमप्रयोगाङ्गमयं प्रतिषेधः। अग्निष्टोमे प्रवृणक्तीति। तत्रैव प्रतिषिद्धप्रतिप्रसवः। तथा चाग्निष्टोमप्रथमप्रयोगे विकल्पः। स च व्यवस्थितः। 'काममनूचानस्य प्रवृञ्ज्यादिति' वचनात्। अतिरात्रप्रथमप्रयोगे नित्यमप्रयोगः, तत्र प्रसवाभावादिति। अग्निष्टोमे प्रवृणक्तीति न प्रथमयज्ञ इति चैकवाक्यतया पर्युदासार्थः। 'यजतिषु ये यजामहं करोति, नानूयाजेष्विति'वत्। अन्यथा 'न प्रथमयज्ञ, इत्यस्य शास्त्रप्राप्तप्रतिषेधकत्वे विकल्पापत्त्या अतिरात्रप्रथमप्रयोगेऽपि तत्प्रसङ्गात्। पुरस्तादुपसदामिति तु कालविधिः। पुरस्तादुपसदां सौम्येनेतिवदिति केचित् ॥१६॥

दर्शपूर्णमासयोः 'पूषा प्रपिष्टभाग' इति श्रुतम्। तत्र पूषाभावाच्चातुर्मास्यादिषूत्कृष्यत इत्याह — **स्यादुत्कर्षः पेषणस्य** ॥१७॥

तत्पेषणं तद्देवताकचरौ 'पौस्नं श्याममालभेत अन्नकाम' इति विहितपशौ पुरोडाशे च स्यात्, अविशेषादिति चेत् — **चरावेव भवेत्स तु।** सः उत्कर्षः। पेषणं चोदकसिद्धम्। न च वचनात् पुरोडाशेऽपि स्यादिति युक्तम्। तादृग्वचनाभावात्ः एतस्यात्यन्ताप्राप्तपेषणोपस्थापकत्वे गौरवात्। पशावपि हृदयादिनाशापत्त्या तद्धिव्ययोगाच्चरावर्थलोपात्प्रकृतिप्राप्तपेषणं निवर्त्तमानं

प्रतिप्रसूयते। अस्य अपूर्वविधित्वेप्युपस्थितिलाघवमस्त्येव । तण्डुलानां कण-भावमात्रस्य च वचनानुष्ठानानन्यरूपत्वविघातोऽपि ॥१८॥

तदेव पेषणं सोमापौंस्नं चरुमित्यादावपि स्यात्। पेषणवाक्ये तद्देवताकयज्यश्रवणेन तत्पूर्वप्रयुक्तत्वानापत्त्या पूषमात्रप्रयुक्तत्वेनात्रापि तदनपायादिति चेत् — **यत्रान्यसहितः पूषा भवेत्तत्र न पेषणम्।** पूषप्रयुक्तत्वे वैयर्थ्याद् भागशब्दोक्ततद्देवत्ययागापूर्वप्रयुक्तं पेषणम्, नान्यसहितपूषदेवतार्कसम्बद्धा इति न तत्र तदिति।

**॥ इति लघुवार्त्तिकटीकायां तृतीयाध्यायस्य तृतीयः पादः ॥**

---

## चतुर्थः पादः

दर्शपूर्णमासयोः 'निवीतं मनुष्याणाम् प्राचीनावीतं पितृणाम् उपवीतं देवानामुपव्ययत' इति श्रुतम्। तत्रोपवीतविधेः शेषो निवीतादिरर्थवादः। विधित्वं कृत्वा चिन्त्यते। षष्ठीश्रुत्या शुद्धपुरुषधर्मो वा प्रकरणसहितश्रुत्या क्रतुयुक्तपुरुषधर्मो वा। प्रकरणाच्छुद्धक्रतुधर्मो वा। प्रकरणे मनुष्यप्रधानान्वाहार्यादिदानधर्मो वा स्वतन्त्रमनुष्यप्रधानातिथिपूजाधर्मो वेति चेत् —**अर्थवादो निवीतोक्तिः**। केवलपुरुषार्थत्वपक्षे फलकल्पनापातात्। आख्याताभावात् विध्यन्तरशेषत्वात्प्रकरणविरोधाच्चेति ॥१॥

दर्शपूर्णमासयोः श्रुतम् — 'उपव्ययत' इति। तत्प्रकरणमनादृत्य सर्वार्थं मृताग्निहोत्रे 'यज्ञोपवीती हि देवेभ्यो दोहयती'ति बहुचनान्तेन सिद्धवदनुवादात्। दर्शपूर्णमासयोरिन्द्रमहेन्द्रयोर्वैकल्पिकत्वेन बहुवचनायोगात्, दूरस्थत्वाच्च। अग्निहोत्रे तु अग्निसूर्यप्रजापतीनां सत्त्वेन बहुवचनोपपत्तेरिति चेत् — **सर्वाङ्गं नोपवीतकम्**। न तावद् बहुवचनानुपपत्तिः। प्राकृतवैकृताभिप्रायत्वाद्बहुत्वस्य। न च दूरत्वम्। यथाप्राप्तानुवादत्वे तस्यादोषत्वात्। तस्मात्प्रकरणस्य लिङ्गाविरोधाद्दर्शपूर्णमासाङ्गमुपवीतम् ॥२॥

इदमेवोदाहरणम् 'नित्यं यज्ञोपवीती'ति स्मृतिप्राप्तानुवाद इति चेत्— **'उपव्ययत' इत्येष क्रत्वर्थस्य विधिर्मतः**। स्मृतिः पुरुषार्थविधिः। अयं च प्रकरणात् क्रत्वर्थ इति संयोगभेदाद्भिन्नविषयतया नानुवादः ॥३॥

मृताग्निहोत्रे 'यज्ञोपवीती हि देवेभ्यो दोहयती'त्यत्र हिशब्दपरित्यागेन जीवदवस्थायां यज्ञोपवीतमग्निहोत्रस्य विधीयत इति चेत् — **यज्ञोपवीती हीत्येत् भवेच्चास्यानुवादकम्**। हिशब्दोपबन्धात् प्राचीनावीतविधिशेषत्वाद् दर्शपूर्णमासतः प्राप्तेश्चानुवादत्वम् ॥४॥

तत्रैव 'ये पुरोदञ्चो दर्भास्तान् दक्षिणाग्रान् स्तृणीयादि'त्यत्र ये दर्भा-

स्तान् पुरा जीवदवस्थायां उदञ्चः उदग्रान् स्तृणीयादि'त्यप्राप्तत्वाद्विधिरिति चेत् — **दर्भाणामुदग्रत्वं स्मृतिप्राप्तमनूद्यते** । यच्छन्दोपबन्धाद्विध्यभावात्, विध्यन्तरशेषत्वाच्च । 'अग्रवन्त्युदग्राणीति' स्मृतिप्राप्तानुवादः । स्मृतेः सर्वकर्मविषयत्वादस्य चाग्निहोत्रमात्रविषयत्वान्न मूलीभूतभावः ॥५॥

तत्रैव श्रूयते—'अधस्तात्समिधं धारयन्ननुद्रवेत् । उपरि हि देवेभ्यो धारयतीति' । तत्र हि शब्दश्रुत्या अधोधारणविधिशेषत्वेनाचारप्राप्तत्वेन वोपरिधारणानुवादः । देशाद्देशान्तरनीयमानस्यान्तरङ्गद्रव्यस्य शिष्टैराच्छाद्य नयनेनोपरिप्राप्तेः समिन्नियमार्थं वचनमिति चेत् — **विधिरेवोपरिधृतौ** । समिधः परिमाणाम्नानां । अत्र मातृकायां ग्रन्थपातः ।

न परं 'लः कर्मणि चे'ति सूत्रं सामानाधिकरण्यं च गौः शुक्ल इतिवल्लाक्षणिककर्त्रभिप्रायमिति न कर्तुराख्यातवाच्यत्वम् । येन वदनतन्निषेधयोः श्रुत्या तच्छेषता स्यात् । ततश्च प्रकरणात् प्रतिषेधः क्रत्वर्थः । अनारभ्याधीतस्मृतिबोधिततत्प्रतिषेधः पुरुषार्थः । तदुल्लङ्घने पुरुषः प्रत्यवेयात्, न तु क्रतुवैगुण्यमिति । अयं तु संयोगपृथक्त्वन्यायात् क्रत्वर्थ इति ॥९॥

दर्शपूर्णमासयोः 'तस्माज्जञ्जभ्यमानो ब्रूयान्मयिदक्षक्रतू' इति श्रुते वाक्ये शानचा कर्तुरभिधानात्समभिव्याहारात्मकवाक्येन प्रकरणं भङ्क्त्वा विपरिणतवाक्यशेषावगतप्राणापानधारणादिरूपफलविशिष्टपुरुषतया मन्त्रविधिरिति चेत् — **जञ्जभ्यमानमन्त्रः स्यात्पुंसः क्रतुमुपेयुषः** । क्रतावपि तादृक् पुरुषसत्त्वेन तत्संस्कारमुखेन प्रकरणानुरोधेन क्रतुफलेनैव तद्वक्तोपपन्ना, न तद्विपरिणामक्लेशो युक्त इति ॥१०॥

दर्शपूर्णमासयोः 'यो ब्राह्मणायावगुरेत्तं शतेन यातयात् । तस्माद् ब्राह्मणाय नावगुरेत्, इति श्रुतः प्रतिषेधः फलकल्पनाभयात् प्रकरणाच्च क्रत्वर्थ इति चेत् — **पुरुषार्थतया बोध्यमवगोरणवर्जनम्** । निषेधान्यथानुपपत्त्या निषेध्यक्रियायाः बलवदनिष्टसाधनत्वे कल्पिते तद्विशेषसमर्पकशतयातनार्थवादात्तद्रूपत्वेऽनिष्टस्यात्रधारितेऽवगोरणनिवृत्तिरूपप्रतिषेधस्य तदनुत्पादकफलत्वाकामान्न प्रकरणानुप्रवेशः । केवलपुरुषार्थ एवैषामिति ॥११॥

दर्शपूर्णमासयोः 'मलवद्वाससा न सम्वदेते'त्ययं प्रतिषेधः प्रकरणात् क्रत्वर्थ इति चेत् — **न सम्वदेत मलवद्वाससेत्यपि पूर्ववत्**। पुरुषार्थ इत्यर्थः। 'तामपरुध्य यजेते'ति वचनात्सर्वस्मात् क्रतुव्यापारान्निवृत्ता रजस्वलेति' न तया क्रतौ सम्वादप्रसक्तिः। अप्रसक्तस्य क्रतौ प्रतिषेधोऽनर्थकः। पुरुषस्य तु स्वाच्छन्द्यात् रागतस्तत्प्रसक्तौ तं प्रत्येवायं प्रतिषेध इति। पुरुषार्थस्याग्निहोत्रादे'र्दीक्षितो न जुहोति, न ददाती'ति प्रतिषेधस्य प्रकरणात् क्रत्वर्थत्ववत् क्रतुमध्ये पुरुषार्थतया प्रसक्तानृतवदनस्य प्रतिषेधवच्चैतस्यापि क्रत्वर्थता स्यादिति केचित् ॥१२॥

अनारभ्य श्रुतम् — 'सुवर्णं हिरण्यं भार्यम्, दुर्वर्णोऽस्य भ्रातृव्यो भवती'त्यत्र विनियोगभङ्गेन सुवर्णताविशिष्टहिरण्यधारणं विधीयमानं फलकल्पनाभयाद्वैदिकत्वसामान्यात्क्रत्वपूर्वमुपस्थाप्य तदर्थं सम्पद्यते। न च कर्मणि कृत्यप्रत्ययेन क्रत्वङ्गहिरण्यानुवादेन धारणसंस्कारो विधीयत इति युक्तम्। लोकेऽपि तत्सत्त्वेन तदनुवादे प्रमाणाभावात्। अतएव क्रत्वर्थधारणानुवादेन सुवर्णताविधिरित्यपि निरस्तमिति चेत् — **पुरुषार्था स्वर्णधृतिः**। न तावद्वैदिकत्वेन क्रतूपस्थाननियमः। स्वर्गतदुत्पत्त्योरपि वैदिकत्वात्। अत आर्थवादिकफलमुद्दिश्य विधीयमाना स्वर्णधृतिः पुरुषार्था ॥१३॥

'येन कर्मणेर्त्सेत् तत्र जयां जुहुयादि'त्यनारभ्य श्रुताः जयाहोमाः लौकिकेषु कृष्यादिष्वपि स्युः। कृष्यादिनापि ऋद्धिं प्राप्तुमिच्छेत्। तदर्थमेवाहवनीयप्रणयनोपपत्तेश्चेति चेत् — **जयाः कर्मणि वैदिके**। अङ्गप्रधानयोः सादेश्यं प्रधानविध्यवगतेऽङ्गे मा बाधः इति [?] श्रौतेष्वाहवनीयवत्स्वङ्गं जयाः। अन्यथा क्षेत्रेषु कृषिः, आहवनीये होम इति तयोर्वैयधिकरण्यं स्यात्। अतएव स्मार्त्ताग्निसाध्यस्थालीपाकादिष्वपि नाङ्गानि ॥१४॥

काम्येष्टिकाण्डे, यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणान् चतुष्कपालान् निर्वपेदि'ति' श्रुतम्। तत्र लौकिके मित्रदायादिभ्यः प्रीत्या विध्यनपेक्षया क्रियमाणेऽश्वदाने निमित्ते द्रव्यदेवताविशिष्टयागविधिः 'वरुण पाशान् मुञ्चतीति' श्रुतफलस्य 'न केसरिणो ददाती'ति निषेधोल्लङ्घनसमुत्पन्नदोषवत्येव सम्भवेन विहितकर्माङ्गाश्वदानेऽयोगादिति चेत् — **अश्वेष्टिर्वैदिके दाने**। लौकिके

वरुणपाशशब्दवाच्यजलोदरजनकता लोकाद्वेदाद्वा नावगतेत्यर्थवादस्य फलपरत्वाभावे तद्वशेन लौकिकदाननिमित्तकत्वायोगात्। उभयनिमित्तकत्वे लौकिकांशे पुरुषार्थो विधिः। वैदिकांशे क्रत्वर्थं इत्यादिवैरूप्यं स्यात्। तस्माद्वैदिक्या इष्टेर्वैदिकदानस्यैव सादृश्यात् झटिति बुद्धिसमारोहात् ज्योतिष्टोमपौण्डरीकादावश्वदानवति क्रतौ वाक्यमिदं नेयमिति वैदिकस्यैव दानस्य निमित्तत्वम्। एतेन गृहदाहादिष्वपि व्यभिचारशङ्कापास्ता ॥१५॥

इयमिष्टिः प्रतिग्रहीतुरेव 'यावतोऽश्वान् प्रतिगृह्णीयादि'ति विधिवाक्ये तस्यैव श्रवणात् उपक्रमस्यार्थवादस्य दातुरपीष्टिः किमुत प्रतिग्रहीतुरिति कैमुतिकत्वद्योतकत्वेनाप्युपपत्तेरिति चेत् — **न स्यादेषा प्रतिग्रहे**। वेदोपक्रमाधिकरणन्यायेनानुपजातविरोध्युपक्रमबलात्तत्रोक्तरीत्या प्राप्तार्थत्वेन च प्रतिगृह्णातिर्णिजन्तपदमिव वा षड्भिर्हलैः कर्षतीतिवत् स्वव्यापारद्वारकप्रयोज्यकर्तृत्वविवक्षया वा नेय इति भाष्यम्।

वार्त्तिके तु तेनैव गतत्वान्नेदमधिकरणान्तरमित्युक्तम्। तदाह — **प्रतिग्रहे निषेधार्थो वार्त्तिके नास्त्ययं नयः**। प्रतिग्रहे निषेधार्थोपपत्तयः वार्त्तिके नास्तीत्यर्थः ॥१६॥

अनारभ्य श्रूयते — 'वि वा एष इन्द्रियेण वीर्येण ··· व्यृध्यते यः सोमं वमती'ति। तस्मात् एतं सोमेन्द्रं श्यामाकं चरुं निर्वपेदि'ति। तत्र लौकिकसोमवमने श्रुतफलस्य प्रत्यक्षत्वात्तत्रैवेष्टिरिति चेत् — **वैध सोमवमाविष्टिः**। तत्र वान्तार्थमेव पानात् प्रतीकारानपेक्षणात्। वैदिकस्य तु सम्यग्जरणपर्यन्तं 'मामेवाङ्नाभिमतिगा' इति मन्त्राद् व्यापारावगमात् प्रतीकारापेक्षायां वमने इष्टिः। फलवचनं तु अर्थवादमात्रम्, अतो न तद्वशेन लौकिकविषयतेति ॥१७॥

येयमिष्टिः फलकल्पनाभिया वैदिकवमन उक्ता, सा ऋत्विग्वमने स्यात्, वैदिकवमनत्वाविशेषादिति चेत् — **सा नर्त्विग्वमने भवेत्**। इष्टेः क्रत्वर्थतायाः यजमानकर्तृकतया तत्समानकर्तृकं गम्यमानं वमनं निमित्तमिति नर्त्विग्वमने इष्टिर्भवेत् ॥१८॥

दर्शपूर्णमासयोः 'यदाग्नेयोऽष्टाकपालो भवती'ति श्रुतम् । तथा उपगृह्णाति, अभिघारयति, द्विर्हविषोऽवद्यति, चतुरवत्तं जुहोती'ति । तत्राष्टाकपालद्रव्यं देवतासम्बन्धित्वेन तद्धितादवगतं 'मा बाधीति' सम्पूर्णं प्रक्षेप्तव्यम् । द्व्यवदानं तूत्पत्तिशिष्टपुरोडाशावरुद्धे साक्षात्साधनत्वायोगात् पुरोडाशस्य तत्साधनत्वं द्वारमिति द्विर्द्विरवदाय सम्पूर्णमावृत्त्या होतव्यम् । ऐन्द्रवायवादिग्रहहोमवत् । शेषकार्याणि तु द्रव्यान्तराक्षेपणिका । तद्वशाद्वा शेषस्थापनं न द्व्यवदानविधिसामर्थ्यादिति चेत् — **द्व्यवदानस्यैव यागे द्रव्यत्वम्** । एकेनैव द्व्यवदानेन यागनिर्वृत्तेर्न गुणभूतद्रव्यवशात्प्रधानावृत्तिर्विना वचनं युक्तम् । न चैन्द्रवायवादौ यागाभ्यासाद्विना क्रमसमुच्चयदर्शनाद्यनुपपत्तिवदाग्नेयत्वमनुपपन्नम् । प्रदेयप्रकृतित्वेनापि पशोरिव तदुपपत्तेः । अतो द्व्यवदानद्वारकं पुरोडाशस्य यागसाधनत्वमिति भाष्यम् ।

वार्त्तिके तु हृदयादिद्वारकं पशोरग्नीषोमीयत्वमित्यत्र हृदयादिष्वेकादशा वै पशोरवदानानीति वचनवत् । नह्यवदानद्वारकं पुरोडाशस्याग्नेयत्वमित्यत्र मानमस्ति । चतुरवत्तवाक्यस्योपस्तरणादिवाक्यप्राप्तावत्तोद्देशेन यागसमसमयमप्राप्तहोमसंस्कारविधिपरतया तदनुवादेन चतुरवत्तस्य साधनत्वेन विधानायोगात् । यागस्य च विनापि प्रक्षेपमारण्योत्सर्गवदुपपत्तेः । आचारस्य च कृत्स्नस्य यागसाधनत्वबोधितश्रुतिविरोधे प्रमाणत्वात् । तस्माच्चतुरवत्तं जुहोतीत्यप्राप्तहोमविधिः । त्यागस्तु कृत्स्नस्याष्टाकपालस्यैव । अधिकरणं तु होमविषयम्, हविषां प्रायो होमदर्शनात् । 'अग्निमुखा वै देवा' इत्यर्थवादाच्च कृत्स्नहोम इति चेत् — अथ वार्त्तिके । **कृत्स्ने हविषि यागार्थे प्रक्षेपो द्व्यवदानगः** । 'चतुरवत्तं जुहोतीति' वचनात्तावत एव होमः, त्यागस्तु कृत्स्नस्य । तथा च 'शेषात्स्विष्टकृत'[1] इत्युपपन्नम् । त्यक्तस्यापि पुनस्तावन्मात्रस्य स्वीकारो वचनवशादा''''बाधेनापि भविष्यतीति न त्यक्तोत्तरार्द्धावदानविरोध इत्युक्तम् ॥१९॥

शेषकार्याणि स्विष्टकृदादीनि एकस्मादेव कार्याणि, तावतैव वचनोपपत्तेरिति चेत् — **शेषकार्याणि सर्वेभ्यः** । द्रव्यगुणकप्रधानकर्मत्वे स्यादेत-

१. समवद्यतीति शेषः ।

देवम्। आकीर्णकरद्रव्याणां क्वचिद् दूरीकरणप्रसक्तौ प्रतिपत्तिनियमोऽयम् स यस्यैव न क्रियते तस्यैव वैगुण्यं स्यात् । प्रतिपत्तित्वञ्च चतुर्थ ........गतमिति नेदमधिकरणान्तरम्, किन्तु पूर्वाधिकरणपूर्वपक्षसिद्धान्तयोः प्रयोजनकथनपरम् ।।२०।।

शेषकार्याणां प्रधानकर्मत्वं कृत्वाचिन्ता। शेषकार्याण्यनियमेन कुतश्चिद् द्रव्यादिति चेत् — **एकस्माद् यदि मुख्यतः।** यदीतिकृत्वा लिङ्गतोद्धाटनं मुख्यस्य प्राप्तनिमित्तत्वाद् द्वेषे स्थापिते तत एव शेषकार्यसम्पत्तौ निमित्तं विद्यान्नेतरेभ्यः शेषस्थापनमिति मुख्यादेव तानि कार्याणि ।।२१।।

आग्नेयं चतुर्द्धा कृत्वेदं ब्रह्मणः इदं होतुरित्यादेशपूर्वकं ऋत्विग्भ्यः कर्मकरेभ्यो दीयमानं भक्षश्रवणात् सोमचमसवत्परिक्रयार्थमिति चेत् — **इदं ब्रह्मण इत्यादिनिर्द्देशो भक्षणार्थकः।** कृत्स्नपुरोडाशस्य देवतायै दत्तस्य अनीशानो यजमान ऋत्विग्भिः तुल्यः। कथं ते न परिक्रीणीताः। अतः प्रतिपत्तिसापेक्षभक्ष्यद्रव्यस्य । तदेव भक्षणं प्रतिपत्तिकर्मेति प्राप्तभक्षस्य ऋत्विङ्नियममात्रं करिष्यमाणकर्मण्युत्साहजननाय विधीयत इति भक्षणं प्रतिपत्तिरिति ।।२२।।

**।। इति लघुवार्त्तिकटीकायां तृतीयाध्यायस्य चतुर्थः पादः ।।**

---

## पञ्चमः पादः

शेषकार्याणि स्विष्टकृदादीन्युपांशुयाजार्थाज्यशेषादपि कर्त्तव्यानीति चेत्— **आज्येनोपांशुयाजार्थे शेषकार्यं विधीयते।** उपांशुयाजार्थे आज्यशेषकार्यार्थं न विधीयते, जुह्वां चतुर्गृहीतस्य निःशेषहुतत्वात्। ध्रौवस्य त्वग्निमोपस्तरणादि······यजुर्होमान्तेषु विनियोक्ष्यमाणत्वात्। स्थाल्याज्यस्य च ध्रुवाप्यायनापराग्निकहोमादिषु विनियोज्यत्वान्न कृतकरशेषोऽस्तीति न कर्त्तव्यानि शेषकार्याणि ॥१॥

साकं प्रस्थायीये 'सह कुम्भीभिरभिक्रामेदि'ति। श्रुतेप्यभिक्रम्यावदाय यथाप्रकृति जुह्वा हवनाच्छेषसत्त्वे भवन्ति स्विष्टकृदादीनीति चेत् **— न प्रस्थायी कुम्भ्यां स्यात्।** प्राकृतहोमार्थाभिक्रमानुवादेन ग्रहस्थाने कुम्भीनां विधानात्ताभिरेव होमः। अत एव तैत्तिरीये — पूर्णं होतव्यम् दारुपात्रेण जुहोति, औदुम्बरं भवतीति श्रूयते। अतः शेषाभावान्न तत्कार्याणि ॥२॥

सौत्रामण्यां पयोग्रहाः सुराग्रहाश्च गृह्यन्ते। तत्र श्रुतम् 'यथागृहीतान् ग्रहानृत्विज उपाददते। उत्तरेऽग्नौ पयोग्रहान् जुह्वति, दक्षिणेऽग्नौ सौरान् ग्रहानिति। तत्र सोमग्रहतुल्यश्रुतित्वादल्पहोमे शेषसत्त्वेन भवन्ति तत्कार्याणीति चेत् — **नापि सौत्रामणी ग्रहे।** उपदेशातिदेशाभ्यामल्पहोमाप्राप्तेर्न शेषकार्याणि, शेषाभावात् ॥३॥

सर्वपृष्ठेष्टौ इन्द्राय राथन्तराय निर्वपति, इन्द्राय बार्हतायेत्यादिना षट्कर्माणि विधाय···यथाप्रकृति पृष्ठ······स्य विभागप्रसक्तौ ··· श्रूयते — 'रथचक्रमात्र एकः पुरोडाशो भवति'। 'समन्तं पर्यवद्यती'ति। तत्रातिदेशात् प्रकृतियागं प्रदेशभेदेन स्विष्टकृदाद्यवदानानि कारयेत्। सर्वपृष्ठपुरोडाशेनावर्त्त्याः प्रतिपत्तयः। प्रतिपत्तयो नावर्त्त्या इत्यन्वयः। एकपुरोडाशे तत्तद्देवतोद्देशेन निरुप्तानां सङ्कीर्णतया प्रदेशविशेषस्य यागसाधनत्वायोगेन

त्यागकाले यस्यै यन्निरुप्तं तत्तस्यै, न ममेति बुद्ध्याकृष्यत् यागात् साधारणः शेषः। ततः सकृदवदानेऽप्यगृह्यमाणविशेषत्वात् साधारणानि शेषकार्याणि नावर्त्यानि। वचनाच्चावदानेष्वदेशानियमः ॥४॥

ऐन्द्रवायवग्रहशेषभक्षः सकृदेवान्यग्रहशेषो द्विर्वेति चेत् — **ऐन्द्रवायवशेषस्य द्विबारं भक्षणं भवेत्।** द्विरैन्द्रवायवस्य भक्षयतीति वचनात् ॥५॥

'सोमे भक्षणं नास्ति, ग्रहैर्जुहोती'ति वचनैर्निःशेषहोमविधानात्। 'अल्पं जुहोती'ति वचनान्यर्थमस्ति। वेदमपि भक्षविध्यभावात् तदभाव एवेति चेत् — **सोमे शेषस्य सद्भावाद्वचनाच्छेषभक्षणम्।** पुरस्तादैन्द्रवायवं भक्षयतीति विशिष्टभक्षविधितस्तत्प्रतीतेः। अस्ति वाचनिको भक्षः समाख्यानिमित्तश्च। 'प्रैतु होतुश्चमसः प्रब्रह्मणः प्रोद्गातॄणां प्रयाजमानस्ये'ति वैदिकी समाख्या। 'सोमचमस' इति लौकिकी च। चमेरदनार्थस्यौणादिकोऽधिकरणसाधनः प्रत्ययः। अतो होत्रादिभिश्चम्यते अद्यतेऽस्मिन्निति सिद्धः समाख्यानिमित्तो भक्षः। तदाह — **होत्रादीनां भवेद्भक्षश्चमसेषु समाख्यया** ॥६॥

'प्रोद्गातॄणामि'त्यत्र अपशु ब्रह्मण्यानां त्रयाणां भक्षः। न चोत्पूर्वस्य गायतेः सामद्वितीयभक्तिवाचितया तद्गानकर्त्तुरेकस्यैवोद्गातुः पाशन्यायेन बहुवचनमनादृत्य प्रातिपदिकानुरोधाद्भक्ष इति युक्तम्। प्रातिपदिकलक्षणयापि बहुवचनस्यार्थवत्त्वेऽनन्यगतिकपाशन्यायस्यात्रानवतारात्। न च तथा सति प्रकृतकर्मसम्बन्धिपुरुषमात्रलक्षणास्त्विति वाच्यम्। अनतिप्रसक्तावान्तरसामान्यस्य गानकर्त्तृत्वस्यैव लक्ष्यतावच्छेदकत्वादिति चेत् — **उद्गातृचमसं तस्य गणः सर्वोऽपि भक्षयेत्।** छन्दोगत्वेनैव लक्ष्यत्वात् ससुब्रह्मण्यानां चतुर्णां भक्ष इति भाष्यम्।

वार्त्तिककारस्तु गानकर्त्तॄणामेकस्तोत्रसम्बन्धिनां होत्रादिवत्सदसि स्थितानामेव. सदः प्रति नीयमानचमसभक्षकत्वमित्य[!] सुब्रह्मण्यानामेवेत्यूचे। तदाह — **मतं वार्त्तिककारस्य सुब्रह्मण्यं विनेति तु** ॥७॥

यथा चमसमन्यांश्चमसांश्चमसिनो भक्षयन्त्यर्थतस्य हारियोजनस्य सर्वे एव लिप्सन्तु इत्यत्र लिप्सामात्रवचने फलाभावात्। भलक्षणार्थो लिप्सा-

शब्दः । तत्र सर्वशब्दस्य सर्वे ब्राह्मणाः भोज्यन्तामितिवत्सन्निहितविषयत्वात् । चमसिनां चातिसन्निधानात् त एव सर्वशब्देन गृह्यन्त इति,'न ग्रावस्तुतो भक्ष इति चेत् — **हार्योजनस्य लभते ग्रावस्तोतापि भक्षणम्** । चमसिनामपि प्रयोगान्तरकर्मान्तरगतानां वारणाय प्रकृतप्रयोगसम्बन्धित्वे वक्तव्ये तावतैवासङ्कुचितवृत्तिसर्वनामस्वारस्ये चनान्यार्थोपात्तचमसिभिर्विशेषणमिति ग्रावस्तुतोऽपि भक्षः ॥८॥

'वषट्कर्त्तुः प्रथमभक्ष' इत्यत्र समाख्याप्राप्तभक्षानुवादेन प्राथम्यमात्रविधानान्नेदं भक्षान्तरमिति चेत् — **वषट्कारनिमित्तोऽपि भक्षः सोमेऽस्ति कश्चन** । वषट्कर्त्तृविशेषितभक्षानुवादे विशिष्टानुवाददोषादेकस्मिन्समासप्रदेशे प्राप्तवदुद्देश्यसमर्पणं प्राप्तवद्विधेयसमर्पणमित्यसम्भवाच्च प्राथम्यविशिष्टभक्षान्तरं वषट्कारनिमित्तं विधीयते ॥९॥

'हविर्द्धाने ग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षान् भक्षयन्ती'ति श्रुतानां भक्षातिरिक्तानां सर्वेषां वचनान्तरादर्थाच्च प्राप्तत्वाद्धोमाभिषवसमानकर्त्तृकं भक्षान्तरं विधीयत इत्यर्थाद्विशिष्टनिमित्तकं पर्यवस्यतीति नैकैककर्त्तुर्भक्षः । तदाह — **तथैवास्त्यपरो भक्षो होमाभिषवहेतुकः** ॥१०॥

चमसादिसमाख्याभिरवकाशत्वात् । होमाभिषवनिमित्तस्य वषट्कारनिमित्तस्य च भक्ष्यस्य चमसातिरिक्तग्रहेष्वपि सावकाशत्वात् समाख्यानिमित्त एव चमसेषु भक्ष इति चेत् — **उक्तानां भक्षहेतूनां समवाये समुच्चयः** । तयोरपि वाचनिकयोः समाख्यया बाधायोगात् । तस्याश्च निरवकाशतया दुर्बलाया अपि ताभ्यां बाधायोगात् । हेतुत्रयसमुच्चये तन्निमित्तभक्षाणामपि समुच्चयः ॥११॥

त्रयाणामेकत्र भक्षेऽध्वर्युहस्ते शेषस्य स्थितत्वात् स प्रथमं भक्षयेत् । 'वषट्कर्त्तुः प्रथमः भक्ष' इति तु चमसिभ्यः प्रथममिति भविष्यतीति चेत् — **समवाये वषट्कर्त्तुः प्रथमं भक्षणं मतम्** । वचनस्य न्यायमात्रेण संकोचायोगात् । 'होतेव नः प्रथमं पाही'ति मन्त्रवर्णात् । होत्रापेक्षया वषट्कारप्राथम्यवच्च वषट्कर्त्तुरेव प्रथमं भक्षः ॥१२॥

'नानुपहूतेन सोमः पातव्य' इत्यत्रोपहूतशब्देनानुज्ञायमानमुच्यत इत्यनुज्ञापूर्वक एव भक्ष इत्याह—**अनुज्ञातैः सोमभक्षः कर्त्तव्यो वचनाद्भवेत्** ।।१३।।

तच्चानुज्ञानं लौकिकाच्छब्दान्मन्त्राद्वेति चेत्—**अनुज्ञानं च मन्त्रेण कर्त्तव्यं लिङ्गदर्शनात्** । लिङ्गवन्मत्राम्नाने लौकिकाप्रसक्ते नैवानुज्ञानम् ।।१४।।

'उपहूत उपह्वयस्वे'ति मन्त्रयोः प्रथमचरमभाव्यनुज्ञानुज्ञापनयोरसामर्थ्यात् वाक्यवशेन सम्पूर्णो मन्त्र उभयत्रावृत्त्या प्रयोक्तव्य इति चेत्—**अनुज्ञानुज्ञापनयोर्मन्त्रौ व्युत्क्रमतो मतौ** । वाक्यक्रमयोर्लिङ्गबाध्यत्वादर्थक्रमानुरोधेन प्रथमभाव्यनुज्ञायां 'उपह्वयस्वेति' चरमभाव्यनुज्ञापन 'उपह्वयत' इति च प्रयोक्तव्यः ।।१५।।

'तदुपह्वानमेकपात्राणामन्येषां च नानुपहूतेने'ति वचनाविशेषादिति चेत्—**एकपात्रप्रसक्तानामेवानुज्ञानमिष्यते** । दृष्टार्थमनुज्ञापनं व्यलीकं भागाधिक्यं च मर्षयितुमित्येकपात्राणामेव ।।१६।।

हौत्रसमाख्याता याज्याः । तत्र काचिद्धोत्रपनीय यजमानस्य विहिता । तत्र सैवापनेया, न वषट्कारः, 'याज्याया अधिवषट्करोती'ति तयोर्भेदावगमात् 'स्वयं वा निषद्य यजती'त्यस्यापि याज्यापनयनेनैव चारितार्थ्यात् । ततश्च होतैव वषट्कर्त्ता भक्षयिता चेति चेत्—**याज्यायां यष्टुरस्त्येव स्याद्वषट्कृति भक्षणम्** । सम्पूर्णयष्टृत्वस्य वषट्कारेण विना अयोगाद् अनवानं वषट्कुर्यादिति'याज्यावषट्कारयोरन्तरा अनवाननप्रतिषेधाच्च वषट्कारपूर्वकं भक्षणं होतुरपनीतं यजमानस्यैव स्यात् ।।१७।।

'यदि राजन्यं वैश्यं वा याजयेत्स यदि सोमं विभक्षयिषेत् न्यग्रोधस्तिभिनीराहृत्य ताः सम्पिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेत्, न सोममि'त्यत्र यजमानचमसे भक्षमात्रं विक्रियते । तस्यैवाद्यन्तयोः कीर्त्तनादिति चेत्—**स्तिभिन्यः साधनं यागे** । यागीयद्रव्यप्रतिपत्तित्वाद्भक्षस्य तस्यैव प्राकृतस्येह प्रत्यभिज्ञानादनेन क्रमेण यजमानचमसयागाभ्यास एव द्रव्यं विधीयते । तद्विधौ च भक्षणं प्राप्तमेवानूद्यत इति याग एव स्तिभिन्यः साधनम् । एतेनाभिषवयुक्तपूतीकानामपि यागसाधनत्वं व्याख्यातम् ।।१८।।

राजसूये दशपेयो नाम सोमयागः। तत्र प्रकृतितो दश चमसाः प्राप्ताः। तत्र वचनद्वयं श्रूयते — 'दश दशैकैकं चमसमनुप्रसर्पेयुरित्येकम्, 'शतं ब्राह्मणाः सोमान् भक्षयन्ती'त्यपरम्। तत्र यजमानचमसं दश राजन्याः भक्षयेयुः। अनुसर्पेयुरिति विधिश्रवणेन दशत्वसंख्याविधानात्प्राकृती संख्या बाधिता, जातिस्तु स्थितैव। तत्र जातिसंख्ययोर्नियमे यजमानचमसे दश राजन्याः। अन्येषु दश दश ब्राह्मणा इति फलिष्यति। 'शतं ब्राह्मणा' इति तु वर्त्तमानसरूपत्वात्प्रचयशिष्टसंख्यानुवादः।

ब्राह्मणपदं तु भूम्ना ब्राह्मणा ब्राह्मणसमुदायानुवादकमिति चेत्—पिबेयुर्ब्राह्मणाः शतम्। समस्तानुवादस्य लक्षणायाश्चासति बाधकेऽनुपपत्तेः। शतानुवादेन ब्राह्मणत्वं पञ्चमलकारेण विधीयते। तेन न्यायप्राप्तराजजातिर्निवर्त्तत इति ब्राह्मणा एव शतं भक्षयेयुः ॥१९॥

॥ इति लघुवार्त्तिकटीकायां तृतीयाध्यायस्य पञ्चमः पादः ॥

---

## षष्ठः पादः

'यस्य खादिरः स्रुवो भवति, यस्य पर्णमयी जुहूर्भवती'त्यनारभ्य श्रुतम् । पर्णत्वाद्यव्यभिचरितक्रतुसम्बन्धिजुह्वादिद्वाराजुह्वादिलक्षितक्रत्वङ्गत्वं वाक्येन प्रतिपद्यत इत्यविगीतम् । तत्रोपदेशातिदेशाभ्यां प्राप्तजुहूद्वारा प्रकृतिविकृति-साधारण्येन प्रत्यक्षविधिना विधीयते, पर्णत्वादीति चेत् — **अनारभ्य विधानं यत्प्रकृतिं तत्प्रपद्यते** । अतिदेशकृतजुहूप्राप्त्युपजीवनेन विकृतौ पर्णत्वप्राप्तिः स्यात् । जुह्वा सहैव तत्प्राप्तौ पुनर्विधानं व्यर्थम् । पर्णत्वं विहाय नातिदेशः । उपकारविशेषणानां समुच्चित्यैव तद्विशेषणत्वस्य प्रकृत्यै क्लृप्ततया विकृता-वपि तथैवातिदेशाच्च उपदेशापौष्कल्येऽतिदेशाप्रवृत्तेश्च । अतः प्रकृतावेवा-नारभ्यातीनां निवेशः ।।१।।

अनारभ्य'सप्तदश सामिधेनीरनुब्रूयादि'ति श्रुतं साप्तदश्यम् । प्राकरणिकं च पाञ्चदश्यं वाक्याद्विकल्पितं सामिधेन्यङ्गं प्रकरणमनादृत्येति चेत्— **विरुद्धं साप्तदश्यादि विकृतिं प्रतिपद्यते** । सामिधेनीस्वरूपे संख्ययोर्वैयर्थ्याद-पूर्वसाधनत्वांशे तन्निवेशे वाच्ये । प्रकरणेन तत्साधनत्वं पाञ्चदश्ये झटिति प्रती-यते । साप्तदश्ये त्वव्यभिचरितक्रतुसम्बन्धिसामिधेनीद्वारा क्रत्वपूर्वमुपस्थाप्य विलम्बत इति तत्साधननिवेशो नैराकांक्ष्यात् प्रकृतेः । श्रुतिसाप्तदश्यासु मित्र-विन्दादिषु निविशते साप्तदश्यम् ।।२।।

प्रकृतावेव 'सप्तदशानुब्रूयाद्वैश्यस्ये'ति श्रुतम् । साप्तदश्यं वाक्यप्रकरणयो-रविशेषाभ्यां च पाञ्चदश्येन विकल्पतामिति शङ्कितत्वात् सर्वप्रयोगसाधारणं पाञ्चदश्यं वैश्यप्रयोगं यावल्लक्षणया गच्छति, तत्पूर्वमेव तदुद्देशविहितं साप्त-दश्यं तेन सम्बध्यते । प्रथमत्वाच्चानुपजातविरोधि पाञ्चदश्यं नाप्राप्तमुत्तरं बाधते । उत्तरं तु न पूर्वाबाधेनात्यन्तं लभते । ब्राह्मणराजन्यप्रयोगयोः सावकाशम् । नित्यं नैमित्तिकं तु निरवकाशमिति पाञ्चदश्यस्य दुर्बलस्य बाधकमिति न विकल्प इत्युक्त्वा पूर्वपक्षमाद्यमत्रालोच्यम् । सूत्रितमपि

काम्यमुदाहरद्भाष्यकारः । 'गोदोहनेन पशुकामस्य प्रणयेदि'त्यत्र न काम्यगोदोहनेन नित्यचमसबाधः । पुरुषार्थक्रत्वर्थाभ्यां भिन्नविषयत्वात् चमसबाधे क्रतुवैगुण्याद्विगुणक्रत्वाश्रितगुणस्यापि वैगुण्यापत्त्या 'क्रतुगुणफलयोरभावापाताच्च । अतो विकृतिगामिता । क्रतवे चमसेन प्रणीय कामाय गोदोहनेन प्रणयनान्तरं वा कर्त्तव्यमिति चेत्—**काम्यं नित्यस्य बाधेन प्रकृतावतिष्ठते** । सामान्यतः प्रवृत्तत्वपूर्वभावित्वसावकाशत्वैर्नित्यस्य बाध्यत्वम्, काम्यस्य तद्वैपरीत्याद् बाधकत्वम् । पुरुषार्थप्रत्यासन्नेऽपि नित्यनैमित्तिकयोर्बाधकं काम्यम् । अतएव 'एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्ये'ति विहितकाम्यानुवचनान्तरेण नित्यं पाञ्चदश्यं नैमित्तिकं साप्तदश्यं च बाध्यते । एकप्रणयनसम्बन्धाद्भिन्नविषययोरपि विरोधोऽस्त्येव । तथा च पशुकामप्रयोगे बाधितश्चमसस्ततोऽन्यत्राङ्गमिति, न क्रतुवैगुण्यम्, न वा विगुणं क्रत्वाश्रितत्वम्, न वा प्रणयनाभ्यासः । तस्मिन्प्रयोगे चमसरहितप्रणयनस्यैवाङ्गत्वात्काम्यगोदोहनेन प्रणयनस्य प्रसङ्गसिद्धत्वादिति ।।३।।

आधानं पवमानेष्टयश्च सन्निहिताः समाम्नाताः । तत्रेष्टीनां विश्वजिन्न्यायेन स्वर्गफलकतया तत्सन्निध्याम्नातमाधानमातिदेशिकाग्निसंस्कारकत्वेनेष्ट्यङ्गमिति चेत् —**नाधानं पवमानेष्टेरङ्गम्** । फलवत्कर्माङ्गत्वेनाग्नीनां तदुत्पादकमाधानमपि फलवत्पवमानेष्टयोऽप्याधानप्रकरणाधीतयदाहवनीयवाक्यादग्न्यर्थाः । तद्वाक्याभावे फलपदाधानप्रकरणात्तदङ्गानि चेति न स्वर्गफलाः । अत आधानं नेष्ट्यङ्गम् ।।४।।

अनारभ्याधीतमाधानं पर्णत्वादिवदग्निद्वारोपस्थितक्रत्वर्थमिति चेत्—**अग्न्यर्थमेव तत्** । पर्णत्वस्याकृतिविशेषरूपजुह्वर्थत्वे तेन विनापि काष्ठान्तरे न तदाकारसम्भवाद्वैयर्थ्यापत्तेः । युक्तं यत्तल्लक्षितक्रत्वपूर्वार्थत्वं वाक्यात् । आधानस्य तु श्रुत्यवगतादृष्टरूपाहवनीयाद्यर्थत्वेऽपि तद्रूपस्यान्यतः सिद्ध्यनवगमेन वैयर्थ्यायोगान्न क्लेशेन क्रत्वपूर्वार्थत्वम् ।।५।।

पवमानेष्टिष्वग्नयोऽतिदेशप्राप्ताः । तदुत्पादनापा···कार्याः । तत्राप्यग्न्यर्थमन्या इति यावत्य एकेन अह्ना भवन्ति, तावत्यः कार्या इति चेत्—**पवमानेष्टिषु न ताः** । प्रथममनावहनीये कर्त्तव्याः, ताभिरग्निसिद्धावन्यवैयर्थ्यम् ।

असिद्धावपि सुतराम् । अतिदेशात्प्राप्तानामप्यसम्भवेन बाधात् । इष्टीनामग्न्यर्थत्वे आधानाङ्गत्वे वा इष्टिसाध्यानां तत्साधनत्वायोगात् । पवमानेष्टीनां दर्शाद्यङ्गत्वमनाशङ्क्यमिति नातिदेशात्पवमानेष्टिषु इष्ट्यन्तरप्राप्तिः । अङ्गत्वेप्येतद्विधिवेलायां प्रकृत्यङ्गत्वसिद्ध्या तदतिरिक्तस्य वातिदेशाच्च ॥६॥

ज्योतिष्टोमे त्रयः पशवः, तेष्वग्नीषोमीयः क्रमसन्निधावुत्पन्नोऽपि 'स एष उपवसथीयेऽहन् द्विदेवत्यः पशुरालभ्य' इति वचनादौपवसथ्येऽहन्यनुष्ठीयते । सवनीयस्त्वौपवसथ्ये सौत्ये च श्रुतः 'आग्नेयः पशुरग्निष्टोम' इत्यौपवसथ्ये 'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोती'ति सुत्यायां गौरनुबन्ध्यस्त्ववभृथान्ते श्रुतः । पशुधर्माश्च यूपच्छेदादय औपवसथ्ये समग्राः श्रुताः । तत्राग्नीषोमीयस्य पशुधर्माणां वानुष्ठानसाद्देश्यलक्षणस्थानप्रमाणं बाधित्वा ज्यौतिष्टोमिकमहाप्रकरणात्तेषां तदङ्गत्वे प्राप्ते सोमयागानुपयुक्ता धर्मा आनर्थक्यात्तदङ्गन्यायेनाङ्गभूतपशुयागेष्ववन्तरन्तोऽविशेषात्त्रिष्वप्यवतीर्णास्त्रयाणामप्यङ्गं भवन्ति । न च सवनीयस्य न सोमयागद्वारकं प्रकरणम् । औपवसथ्ये एव गुणानाकृष्टशक्तिकविधिना तद्विधानात् । सुत्यायां त्वाश्रितग्रहग्रहणोत्तरकालविधौ संक्रान्ततया यागाविधायित्वात् । अतोऽवान्तर प्रकरणे तदर्था एव धर्मा इति वाच्यम् । सुत्याकालोत्पन्नदूरस्थयागानुवादेन वपया प्रातः सवने प्रचरति माध्यन्दिनसवने पुरोडाशेनाङ्गैस्तृतीयसवनइत्युपादेयगुणविधिसम्भवादौपवसथ्योत्पन्नदूरस्थकर्मानुवादेन कालस्यानुपादेयस्य विधातुमशक्यतया कालविशिष्टकर्मण एव सुत्यायामुत्पत्तेरवान्तरप्रकरणस्योत्पत्तिविधिविधुरौपवसथ्येऽहन्युन्मेषात् । न च प्रातः सवने वपाप्रचारद्वारौपवसथ्योत्पन्नस्यापि सन्निधानात् कालविधिर्युक्त इति वाच्यम् । तथाप्युपाकरणादीनां वपाप्रचारात्प्राक्कालिकानां प्रातः सवने विपरिवृत्त्यभावेन तत्र कालविध्ययोगतादवस्थ्यात् । तस्मात्सवनीयस्यावान्तरप्रकरणाभावादग्नीषोमीयस्थानस्य दुर्बलत्वात् ज्यौतिष्टोमिकमहाप्रकरणद्वारकसम्बन्धस्त्रिष्वपि तुल्य इति तुल्यवद्धर्मसम्बन्ध उपदेशादिति चेत्—**पशुधर्मास्तु दैक्षगाः** । भवेदानर्थक्यात्तदङ्गन्यायो, यदि साक्षाद्धर्मग्राहिपशुयागो निकटे न स्यात् । शक्नोति त्वग्नीषोमीयस्तत्रानुष्ठीयमानस्तद्धर्मान् ग्रहीतुमिति तदर्था एवोपदेशतो धर्माः । महाप्रकरणस्यापि तावतैवोपपन्नत्वेनाविरोधात् । अन्यौ द्वावप्यतिदेशेन धर्मान् गृह्णीत इति यो दीक्षितो यदग्नीषोमीयमिति वाक्योत्पन्नो दैक्षः तद्द्वारा पशुधर्माः ॥७॥

दर्शपूर्णमासयोः सायं दोहः पूर्वेद्युः प्रातर्दोहोपरेद्युः कपालोपधानानन्तरं क्रियते। शाखाच्छेदादयस्तु केचन धर्माः पूर्वेद्युः क्रियमाणाः सन्निधानात् सायं दोहार्था इति चेत् — उभयार्थाः दोहधर्माः। प्रकरणात्। दधियागस्यापरेद्युरनुष्ठीयमानस्य स्थानस्याप्यभावात्। दध्युत्पादार्थं दोहनातञ्चनशाखाच्छेदादेश्च 'गुणानाञ्च परार्थत्वादि'ति न्यायेन परस्पराङ्गाङ्गिभावायोगात्। अत उभयार्थाः ॥८॥

प्रातः सवनसन्निधौ उपोप्ते ग्रहाः साद्यन्ते, अनुपोप्ते ध्रुव' इत्याम्नातानां सन्निधानासन्देहात्प्रातः सवनार्थतेति चेत् — **ग्रहधर्माः समस्तगाः।** सवनत्रयगाः, प्रकरणबलीयस्त्वात् ॥९॥

अग्नीषोमीये यूपपरिव्याणं श्रुतम्। 'परिव्ययत्यूर्ग्वै रशने'ति। सवनीयेप्याश्विनं ग्रहं गृहीत्वोपनिष्क्रम्य यूपं परिव्ययतीति। तत्र रशनाधर्माः त्रिवृद्भवति, दर्भमयी भवति, प्रपिष्टानां कर्त्तव्येत्येवमादयः क्रमादग्नीषोमीयार्था इति चेत् — **परिव्याणद्वयस्यापि।** स धर्मा रशनातद्धर्माणामेव यूपार्थत्वावगमात् स्थानबाधः ॥१०॥

पूर्वोक्ताः ग्रहधर्माः प्रकरणात्। तत्राम्नातानामेव स्युः। नानारभ्य श्रुतांश्वदाभ्ययोरिति चेत्—**ग्रहधर्माः समाम्नाताः भवन्त्यंश्वदाभ्ययोः।** प्रकरणात् यागार्थानां तद्यागसाधनग्रहमात्रनिवेशादंश्वदाभ्ययोरपि तत्साधनत्वात्तद्धर्मत्वम् ॥११॥

अग्निचयने समाम्नाता इष्टकाधर्माः, अखण्डामकृष्णामित्यादयः। अप्रकरणाधीतानां न भवन्ति विनियोजकवाक्यस्याप्यप्राकरणिकत्वेन तद्द्वारकप्रकरणासम्बन्धस्याप्यभावादिति चेत् — **एवमेवेष्टकाधर्माश्चित्रिण्यादिषु सङ्गताः।** अप्राकरणिकवाक्येनापि दूरस्थानुवादेन तदपूर्वसाधनसम्बन्धनात्तत्साधननिवेशिनो धर्मास्तास्वपि स्युः ॥१२॥

ज्योतिष्टोमे राजन्यादिनिमित्तः फलचमस इज्याविकार इति स्थिते सोमेन समानविधानत्वादुपदेशेनैवापूर्वसाधनांशे विहिताभिषवादीन् स गृह्णाति। बहुव्रीहिषु श्रुतावघातादीनि च यवा इति चेत् — **स्तिभिनीनां न सोमेन स्या-**

त्समानविधानता । व्रीहियवयोरनुष्ठानतोऽनित्यत्वेऽपीतरेतरानालोचनेन विहितयोराम्नानतो नित्यत्वादनुष्ठानतो नित्यद्वाराभावात् तुल्यवद्धर्मग्राहित्वं युक्तम् । निमित्ते श्रूयमाणोऽनुष्ठीयमानश्च फलचमसो नित्यवदाम्नातानां नित्यवदपूर्वं साधयतां धर्माणां द्वारीभवितुमर्हति । अभिषवादिधर्मैर्नित्यवत्क्रतोरुपकुर्यादनित्यफलचमसद्वारेत्यनुपपत्तेः । सोमस्तु आम्नानतोऽनुष्ठानतश्च नित्य इति युक्तम् । यद् द्वारतां प्रतिपद्यते धर्मविधीनामपि नित्ये धर्मं विधाय चरितार्थानां निमित्तालोचनेन पश्चाद्विधीयमानफलचमसे स्वार्थविधानं नावृत्त्या विना स्यात् । तस्मादतिदेशत एव धर्माः । ननु स्तिभिनीत्वेन द्वारत्वे उक्तदूषणानि नापूर्वसाधनत्वेन । तद्रूपस्य सर्वदा सर्वान्प्रत्यव्यभिचारात् । यथा नीवारपूतीकयोस्ताद्रूप्येणानित्यत्वेऽप्यपूर्वीयत्वेन नित्यतया सामानविध्यं व्रीहिसोमाभ्याम् । न च विधिवाक्ये तत्तद्रूपेण तयोरविधानात् व्रीहिसोमावयवानुस्यूत्या तद्रूपेणैव विधानाद्विजातीयाकारस्यावर्जनीयत्वेन ग्रहणान्न दोषः । स्तिभिनीनां तु न सोमावयवविवक्षया विधानम्, किन्तु निमित्ते तेन रूपेणेति वैषम्यमिति वाच्यम् । तर्हि व्रीहित्वेनैव विधिवाक्ये तेषां विधानात्तत्र श्रुतावघातादीनां यवेष्वप्राप्त्यापत्तेः । यदि च तत्रापूर्वीयत्वेनैव तेषां शेषित्वात् यवेष्वपि तद्रूपसत्त्वात्तत्प्राप्तिः । बर्हिस्तिभिनीनामपि स्वरूपे धर्माणां वैयर्थ्यात्सोमेष्विवापूर्वीयत्वेनैव शेषत्वमिति तुल्यम् । तस्मादत्र कथं सिद्धान्त इति केचित् ॥१३॥

मुख्यव्रीह्याद्यभावे नीवारादिप्रतिनिधिर्वक्ष्यते । तत्रापि पूर्वाधिकरणसिद्धान्तवदनित्यद्वारत्वादसमानविधानत्वमिति चेत् — **[मुख्येन स्यादिति]** व्रीह्यवयवविवक्षयैव सकलासम्भवे विधानान्नानित्यद्वारत्वमिति समानविधानता ॥१४॥

'यदि सोमं न विन्देत्, पूतीकानभिषुणुया'दित्यत्र मुख्याभावे निमित्ते पूतीकत्वेन विधानात् फ़लचमसवदसमानविधानतेति चेत् — **पूतीकानां तथैव सा**। नाभावे विधिः प्रतिनिधिनियमोऽयमिति षष्ठे वक्ष्यते। तथा च पूर्ववत्समानविधानता ॥१५॥

ज्योतिष्टोमस्य चतस्रः संस्थाः । अग्निष्टोम उक्थ्यः षोडश्यतिरात्रश्चेति । तत्राग्निष्टोमसंस्था क्रत्वर्था । फ़लाश्रवणात् । अन्यास्तिस्रः क्रत्वा-

श्रिताः फले विधीयन्ते। 'पशुकाम उक्थ्यं गृह्णीयात्' 'षोडशिना वीर्यकामः स्तुवीत' 'अतिरात्रेण प्रजाकामं याजयेदि'ति पशुकामवाक्ये । उक्थशब्देन संस्थोच्यते, न ग्रहणम्, तत्र तस्य वाच्यस्तोत्रसम्बन्धेन लाक्षणिकत्वात् । संस्थायामपि स्तोत्रसम्बन्धेन लक्षणेति चेत्— न । तत्संस्थक्रताविव तत्स्तोत्रसम्बन्धषोडश्या द्वावप्रयोगात् । तत्र चाकृत्यधिकरणन्यायेन संस्थाया एव वाच्यत्वात् । न च स्तोत्रस्यैव फले विधानम् । तस्य नपुंसकशब्दवाच्यत्वात् । संस्थायां चाश्रयतो लिङ्गलाभात् । अत्र चोक्थ्यषोडशिशब्दयोर्वाक्यशेषात्पुल्लिङ्गत्वावगमात् । संस्थयोरेव फले विधानम् । ग्रहणस्तोत्रयोश्चानुवादमात्रम् । अतिरात्रशब्दस्तु रात्रिमतीत्य समाप्यमानक्रतौ वर्त्तमानेऽपि क्रतौ 'सोमेन यजेते'ति विहितत्वात्समाप्तिरेवात्र विधेयेति । स तस्या एव फलम् । एवं तिसृणां संस्थानां फलसाधनत्वे दीक्षणीयादीन्यङ्गान्याश्रयीभूतयागस्य संस्थानां च समानविधानानि सर्वस्यापि फलवत्त्वेन प्रकरणाविशेषादिति चेत्—**स्वाश्रयक्रियया-संस्था न समानविधानकाः** । दध्यादिवदाश्रयाकांक्षाणां संस्थानामाश्रयक्रियानिरपेक्षतयाङ्गसम्बन्धायोगात् । क्रियायाश्च स्वयंफलवत्या संस्थाभिर्विनाप्यङ्गसम्बन्धोपपत्तेर्विशेषग्रहणात्, न तुल्यवदङ्गग्राहित्वम् । तथात्वे वा अङ्गविधीनां प्रधानविध्येकवाक्यतया प्रयोजनपर्यवसायित्वान्नित्यानित्यप्रयोगद्वयानुसारेण नित्यवदनित्यवच्च स्वार्थं विदधतां आवृत्तिः स्यात् । तथा फलाद्यविधेयगुणस्य परप्रयुक्तत्र्यंशभावनाश्रयतया तत्राङ्गानि विधाय पश्चाद्विधीयमानगुणकरणिकायामपि भावनायां स्वार्थविधानादावृत्तिः स्यात् । सोमतत्संस्काराणामाश्रयक्रियामात्रार्थतया······मिश्रविधिविधेयानामारादुपकारकाङ्गानां············ योगाश्रयक्रिया फले वा अङ्गतया असम्बन्धिसंस्कारविधिर्निर्विच्छिन्नप्रकरणाः संस्थाः न दीक्षणीयाद्यङ्गग्रहणे समर्था इत्यतिदेशाद् । देवता त्वङ्गप्राप्त······ क्रिया यानुष्ठितैरङ्गैरेव प्रसङ्गसिद्धेर्न पृथक् क्रियन्ते । अतो न समानविधानाः ॥१६॥

**॥ इति लघुवार्त्तिकटीकायां तृतीयाध्यायस्य षष्ठः पादः ॥**

---

## सप्तमः पादः

दर्शपूर्णमासयोः वेद्यां बर्हिषि हवींष्यासादयति, 'बर्हिर्लुनाति, वेदिं खनति' इत्यादिना विहितवेदिबर्हिस्तद्धर्माः प्रकरणात् प्रधानमानमात्रार्थाः। वाक्यश्रुतिभ्यां हविर्वेद्यादिमात्रार्थत्वे वैयर्थ्यात्। प्रयोगान्तरवेदिहविराद्यतिप्रसङ्गाच्चेति चेत् — **अङ्गप्रधानहविषां वेदिधर्मादयः समाः।** वाक्यसंकोचपरिहाराय प्रकृतदर्शपूर्णमासोपकारिहविर्मात्रग्रहणेऽप्यङ्गहविषां स्वस्वापूर्वनिर्वृत्तिद्वारा प्रधानोपकारित्वेन वैयर्थ्याप्रसक्तेः। सत्यपि वा प्रधानमात्रार्थत्वे प्रकृतप्रयोगसम्बन्धिहविर्मात्रस्य द्वारत्वोपपत्तेरङ्गप्रधानार्था वेद्यादयः ॥१॥

ज्योतिष्टोमे यजमानसंस्काराः केशश्मश्रुवापादयः कर्तृसंस्काराः सन्तस्तद्द्वाराङ्गप्रधानार्था भोक्तृसंस्कारकत्वेन फलार्थत्वे करणतुल्यकक्षतापत्तेरिति चेत् — **प्रधानार्थाः पुनः केशश्मश्रुवापादयो समाः।** भोक्तृत्वांशस्य प्रधानत्वाददृष्टत्वेन शास्त्रैकगम्यत्वात्। कर्त्रंशस्य तु तद्वैपरीत्यात्फलप्रतिग्रहयोग्यताधानेऽपि फलसाधनत्वाबोधनेन करणतुल्यतानापत्तेः प्रधानार्था एव वपनादयो नाङ्गार्थाः ॥२॥

सौमिकी वेदिः प्रधानमात्रार्था 'इयति शक्ष्यामहे' स्यां [स्म] कर्तुमिति फलवच्चिकीर्षितप्रधानार्थत्वावगतेरिति चेत् — **वेदिरङ्गप्रधानानां प्रचारे सौमिकी समा।** साङ्गस्य फलवत्त्वेन चिकीर्षितत्वादङ्गप्रधानार्था वेदिरित्यङ्गविकारपशवादौ प्रवर्त्तते, न त्वङ्गेषु प्राकृती वेदिरस्तीति चेत्, न। उपदेशात्त[?] द्वाक्षात् ॥३॥

दर्शपूर्णमासयोः 'चतुर्होत्रा पौर्णमासीमभिमृशेत्', 'पञ्चहोत्रामावास्यामि'ति हविरभिमर्शनमन्त्रौ प्रधानमात्रार्थौ पौर्णमास्यमावास्याशब्दयोस्तद्वाचित्वादिति चेत् — **अङ्गप्रधानहविषां मन्त्रौ तदभिमर्शनौ।** पौर्णमास्यमावास्याशब्दयोः कर्मबोधितया तयोरभिमर्शायोगात् द्वितीयासप्तम्यर्थौ कृत्वा तस्मिंस्त-

स्मिन् प्रयोगे तेन तेन मन्त्रेणेति पर्यवसानेऽङ्गप्रधानहविरर्थता स्यात् । आसन्नानि हवींषीति वाक्यान्तरानुग्रहाश्च भवति ॥४॥

ज्योतिष्टोमे 'दण्डेन दीक्षयति', 'द्वादशशतं दक्षिणेति' च श्रुतम् । दीक्षादक्षिणमङ्गप्रधानार्थम्, दीक्षाणां कर्तृसंस्कारकत्वात् दक्षिणायाः कर्त्रानति-द्वारा प्रयोगाङ्गत्वादिति चेत् --- **सोमे प्रधानमात्रार्था दीक्षा दक्षिणया सह ।** दीक्षा सोमस्य दक्षिणा सोमस्येति तादर्थ्यषष्ठ्या प्रधानमात्रार्थत्वावगमात् । परम्पराश्रयणानर्थक्ययोरयोगात्तन्मात्रार्थत्वम् ॥५॥

यूपे श्रूयते 'अर्द्धमन्तर्वेदि मिनोति 'अर्द्धं बहिर्वेदी'ति । तत्रार्द्धमन्तर्वेदीति विधिः । बहिर्वेदीत्यर्थप्राप्तानुवाद इति चेत् — **अन्तर्वेदी बहिर्वेदीत्यन्तरालस्य लक्षणा ।** बहिरर्द्धस्य नित्यवत्प्राप्त्यभावाद्विधाने च वाक्यभेदादर्द्धमेवान्तर्वेदीति विधौ परिसंख्यापत्तेः । उभाभ्यां सन्धिदेशो लौकिको लक्षितो यूपावटमानाङ्गत्वेन विधीयते ॥६॥

'उत यत्सुन्वन्ति सामिधेनीस्तदन्वाहुरि'ति सोमो दक्षिणहविर्धाने सामिधेनी यूपादीन्यर्थके हविर्द्धानं सामिधेन्यङ्गं विधीयत इति चेत् — **देशः स्यात्सामिधेन्यङ्गं हविर्द्धानेन लक्षितः ।** कृतकरस्य हविर्द्धानस्य विधावपूर्वविधित्वानपेक्षित्वविधित्वयोः प्रसङ्गादाहवनीयपश्चिमदेशस्य प्रकृतिप्राप्तस्य दक्षिणोत्तरहविर्द्धानाधारस्यानियतप्राप्तस्य लक्षणया देशविशेषस्य नियममात्रं विधीयते ॥७॥

दक्षिणायुक्तानि सर्वकर्माणि यजमानेनैव साङ्गानि कार्याणि । सामानाधिकरण्यात्मनेपदाभ्यां फलस्य कर्तृगामित्वावगमात् । तस्य च साङ्गप्रधानसाध्यत्वात् । दक्षिणादानं त्वदृष्टार्थं सर्वकरणाशक्तयजमानविषयं वा शक्तः स्वयमेव सर्वं कुर्यात् अशक्तः स्वदानाहविस्त्यागमात्रातिरिक्तमन्येन कारयेदिति चेत् — **हविस्त्यागादितोऽन्यत्र कारणीया क्रियेतरैः ।** दृष्टसम्भवेऽदृष्टकल्पनस्य दानपाक्षिकत्वस्य च परिहाराय परिक्रयार्थत्वं दानस्य साङ्गकर्तृत्वं चाङ्गेषु प्रयोजकत्वेनातो दक्षिणादानत्यागाभ्यामन्यत ऋत्विक्कार्यम् ॥८॥

स चर्त्विगेक एव आध्वर्यवादिसमाख्यानात्तत्कर्मनिमित्तत्वेनैकस्मिन्नपि

पावकलावकादिसमाख्यावदुपपत्तेरिति चेत् — **होत्राद्यास्ते च भिद्यन्ते संज्ञावरणभेदतः ।** अप्रवृत्तपूर्वस्य कर्त्तुरभ्यर्थनात्मकवरणकाले तत्साध्यत्वेन 'ब्राह्मणं वृणीत' इत्यादिभ्योऽवगम्यमाना समाख्या न क्रियायोगनिमित्ता भवितुमर्हति । बहूनि च वरणान्यभ्यासन्यायेन विधीयन्त इति वृत्तस्य वरणायोगाद् यावद्वरणमृत्विग्भेदः । तच्च महर्त्विजां होतृकाणाँ च मन्त्रेण, अन्येषां लौकिकवचनेन वरणोत्तरकालं च य एवं वृतः स्वयं चैवममानीति सङ्कल्पयति । तस्मिन् लोकवेदयोस्तत्तत्समाख्यादर्शनात् यजमानप्रार्थनर्त्विकसंकल्पाभ्यामध्वर्युत्वादिकं साध्यम् । सत्रेषु सर्वेषां स्वयं प्रवृत्तेः । सङ्कल्पमात्रमेव निमित्तम् । न चालौकिकमध्वर्युत्वादिकं तत्साध्यम् । दृष्टानत्यर्थत्वेनैवोपपत्तावदृष्टकल्पनायोगात् । तथा च वरणभेदात् संज्ञाभेदाच्च तावतां भेदः ।।९।।

चमसाध्वर्यवस्तु यौगिक्या समाख्ययाध्वर्यवः पुरुषा एवेति चेत्— **चमसाध्वर्यवस्तेभ्यो भिन्नाः स्युः ।** वरणभेदात्तेभ्यो भिन्नाः स्युः । सदस्योऽपि वरणभेदादन्यः ।।१०।।

'चमसाध्वर्यून् वृणीत' इत्यत्र बहुत्वस्य संस्कार्यगतत्वेनाविवक्षितत्वादेकश्चमसाध्वर्युरिति चेत् — **बहवस्तु ते ।** क्रत्वङ्गतया तेषामुपादेयत्वाद् बहुत्वविवक्षा । वृत्तैश्चमसाध्वर्युभिः क्रतुं भावयेदिति । अतएव 'स्वाध्यायोऽध्येतव्यः' 'पुरोहितं वृणीते' 'अध्वर्युं वृणीत' इत्यादावुक्तरीत्योपादेयगतत्वाद्विवक्षिता संख्या । तथा चाध्वर्यवं सर्वमेकेनाध्वर्युणा कर्त्तव्यम् । एवं होत्रादिसमाख्यातमपि होत्रादिभिः ।।११।।

चमसाध्वर्युगतं बहुत्वं कपिञ्जलन्यायात्त्रित्वरूपमिति चेत् — **दश ते ।** चमसदशत्वात्तेऽपि दश ।।१२।।

संज्ञाभेदात् शमिता तेभ्योऽन्य इति चेत् — **शमिताध्वर्युपुरुषः स्यात्तु कश्चन ।** समाख्याया यौगिकत्वात् पृथग्वरणाभावाच्च 'पराङ्गावर्त्ततेऽध्वर्युः पशोः संज्ञप्यमानादि'ति वचनादध्वर्य्वतिरिक्तम् । तत्पुरुषः शमिता ।।१३।।

उपगास्तेभ्योऽन्ये ऋत्विजां परस्परगुणभावायोगात् । तेषां च गुणत्वादिति चेत् — **ऋत्विक्ष्वेवोपगातारः ।** प्रैषप्रैषार्थकारित्ववत् गुणाभावसम्भवाद्वरणाभावात् यौगिकत्वाच्च समाख्याया ऋत्विज एव ते ।।१४।।

सोमविक्रयी वरणाभावादृत्विजः मध्यम एवेति चेत् — **तद्भिन्नः सोमविक्रयी**। अक्रत्वर्थत्वाद्विक्रयस्य नर्त्विजः कुर्युरित्यन्य एव सः ।।१५।।

ये वृत्ताः पुरुषाः, ते सर्वे ऋत्विक्पदवाच्याः । ऋतौ यजतीति ऋत्विक्-शब्दः कृदन्तः। सर्वेषु तद्योगाद् ··· शब्दवदविशिष्ट इति चेत् — **वृत्तेषु ऋत्विजः केचिद् ब्रह्माद्याः** । वरणविशेषनिमित्तमृत्विक्त्वम्, न सर्वेषाम् । यद्यपि चमसाध्वर्युवरणव्यावृत्तमन्येष्वनुगतं वरणावान्तरसामान्यं नास्ति, तथापि तत्तद्वरणविशेषा एव तावद् रूपेण निमित्तमिति भाष्यम् । तथात्वे ऋत्विग्दधृगित्यादिना क्विन्नन्तत्वेन निपातनस्य ऋत्विक् यजकृदित्यस्य च बाधापत्तेः, यौगिकत्वप्रसिद्धिविरोधाच्च वरणविशेषनिमित्तत्ववद् यजनविशेषनिमित्तत्वेनापि चमसाध्वर्युव्यावृत्तिसिद्धेः । 'ऋत्विजो वृणीत' इत्यस्य 'अध्वर्युं वृणीते,' 'यूपं छिनत्ती'त्यादिवदप्रसिद्धार्थत्वप्रसङ्गाच्च । तस्मात् यष्टृत्वविशेषनिमित्तमृत्विक्त्वं ब्रह्मादीनामेव ।।१६।।

ऋत्विक्संख्याया अनियम इति चेत् — **ते तु षोडश** । 'ऋत्विग्भ्यो दक्षिणां ददाती'त्युक्त्वा 'आग्नीध्रे ददाति', 'ब्रह्मणे ददाती'त्यादिना षोडशानां सङ्कीर्त्तनात्तावन्त एव ।।१७।।

पृथग्वरणाविधानात् सदस्याः सप्तदशाः। न च ब्रह्मैव सदस्यः, तयोर्वरणभेदादिति चेत् — **स्वामिसप्तदशास्ते स्युः** । सदस्यवरणस्यादृष्टार्थत्वात् स्वाम्येव सप्तदशः ।।१८।।

षोडशर्त्विजां लिङ्गप्रकरणाभ्यां समाख्यां बाधित्वा यद् येन कर्त्तुं शक्यं स तत्कुर्यादित्यव्यवस्थेति चेत्—**तेषां कार्यं व्यवस्थया** । लिङ्गप्रकरणयोरनियतकर्त्रापादकयोर्व्यवस्थाकांक्षत्वात् समाख्याकृतनियममनुमन्येते । तस्माद् यथासमाख्यं नियमः । नेष्ट्रीयपोत्रीययाजमानादिविशेषसमाख्याभिर्विशेषवचनैश्च सामान्यसमाख्या बाध्यते। यथा 'मैत्रावरुणः प्रेष्यति चान्वाह चेति'प्रैषेऽध्वर्योर्बाधः । अनुवचने होतुः पूर्वोक्तसमाख्याविनियोगस्यैवायं प्रपञ्चः ।।१९।।

'यदाहवनीये जुहोती'त्यनारभ्याधीताहवनीयादेः प्रकृतिमात्रार्थत्वं पर्ण-

त्वादिवदिति चेत् —**अग्नयस्तुल्यवद् यान्ति होमात्प्राकृतवैकृतान्** । प्रत्यक्षद्वारत्वात्प्राकृताप्राकृतौपदेशिकेषु अग्निहोत्रचतुरवत्तग्रहचमसामामनोपहोमादिद्विरुक्ततादोषाभावादातिदेशिकहोमवर्जं उपदेशादाहवनीयप्राप्तिः ॥२०॥

'मैत्रावरुणः प्रेष्यति चानु चाह चे'त्यत्र सहितोद्देशेन प्रशस्तविधौ वाक्यभेदापाताद् व्यस्तयोरपि तत्कर्त्तृत्वमिति चेत् — **प्रैषानुवचने युक्ते मैत्रावरुणकर्त्तृके** । एकैकात्मकस्य प्रैषस्यानुवचनस्य च निर्ज्ञातकर्त्तृत्वेनानपेक्षितविध्यापातात्प्रैषानुवचनात्मकहोता 'यक्ष्ये' इत्यादेरुभयकर्त्तृत्वानुपपत्त्या ताभ्यां विच्छिन्नस्यापेक्षितः कर्त्तोभयात्मकमन्त्रोद्देशेन विधीयत इति न विशिष्टानुवाददोषः ॥२१॥

विशेषसमाख्यया सामान्यसमाख्याबाधाच्चमसैश्चमसाध्वर्यव एव जुहुयुरिति चेत् — **चमसानां न होतारं चमसाध्वर्युसंज्ञिताः** । चमसेष्वध्वर्युवदिति चमसाध्वर्यव इति सामान्यसमाख्यापेक्षत्वान्न बाधकत्वमतोऽध्वर्युर्जुहुयात्तस्य ग्रहहोमादिव्यापृतत्वे तेऽपि जुहुयुः ॥२२॥

सामवेदे विहितः श्येनः यजुर्वेदे वाजपेयस्तयोस्तत्रैव साङ्गप्रयोगविधेरतिदेशप्राप्तनानाकर्त्तृन् बाधित्वोपदेशरूपप्रयोगवचनेन तेन तैरेव स कर्त्तव्य इति चेत्—**श्येनादिषु स्युर्नानैव कर्त्तारः प्रकृताविव** । पदार्थप्राप्त्यपेक्षः प्रयोगविधिः सकर्त्तृकाणां पदार्थानामतिदेशतः प्राप्तिं प्रतीक्षत इत्युपजीव्यविरोधेनोपदेशात्मकोऽपि तदनुसारेणैव नानाकर्त्तृकान् पदार्थान् विधत्ते । समाख्या पाठनिमित्ता, न विधिनिमित्ता । पाठश्च पदार्थानां नाना वेदेष्विति यथाप्रकृति नानाकर्त्तारः ॥२३॥

**॥ इति लघुवार्त्तिकटीकायां तृतीयाध्यायस्य सप्तमः पादः ॥**

---

## अष्टमः पादः

सोमे परिक्रये आध्वर्यव औद्गात्रे च द्वादशशतं दक्षिणे'त्याम्नातः। समाख्यावशादृत्विग्भ्यां कर्त्तव्यः। यजमानस्तादृशमुपायं यजमानादिना कुर्यादिति चेत् — **परिक्रयो याजमानः**। परिक्रयात्पूर्वमृत्विजामभावात्परिक्रीतानां वान्यत्रैव समाख्यानियमात् यजमानेनापि कस्यचित्कर्त्तव्यत्वप्राप्तौ तन्नियमार्थत्वात्परिक्रयवचनस्य यजमान एव तं कुर्यात्। 'य एतामिष्टकामुपदधाति स त्रीन् वरान् दद्यादि'त्यादौ वचनादन्येनापि दातव्यः ॥१॥

'केशश्मश्रु वपत' इति श्रुताः। श्मश्रुवापादयः समाख्ययाध्वर्योरिति चेत् — **श्मश्रुवापादयस्तथा**। याजमानाः फलिसंस्काराः। एतेन कर्त्तृगुणकाः यजमाने फलग्रहणयोग्यतार्थं क्रियन्ते। अध्वर्युस्तु गुणकर्त्तृत्वेनैव परिक्रीतो न तान् कुर्यात्। 'हिरण्यमालिन ऋत्विज' इत्यादौ वचनाद् ऋत्विजामपि ॥२॥

'द्व्यहं नाश्नाती'त्यादि कायशोषणं तपः क्लेशात्मकत्वादार्त्विज्यमिति चेत् — **तद्वत्त्रयः**। पचनादिवत्तपोऽपि याजमानम्। फलोत्पत्तिप्रतिबन्धकपापक्षयार्थत्वात् 'ऋत्विज उपवसन्ती'ति वचनाद् ऋत्विजामपि ॥३॥

वाजपेये 'हिरण्यमालिनः प्रचरन्ती'ति श्रुते हिरण्यमालित्वं समाख्ययाध्वर्युपुरुषाणामेवेति चेत् — **हिरण्यमय्यो मालाः सर्वस्य चर्त्विजः**। प्रतिसंस्कार्यं संस्कारावृत्तेः सर्वेषाम्। गुणकर्त्तृष्वेव समाख्या नियामिका ॥४॥

'यदि कामयेत वर्षुकः पर्जन्यः स्यादि'ति। 'नीचैः सदो मिनुयादि'त्यत्र मिनोतिसामानाधिकरण्यात्काम आध्वर्यवो, 'यदि कामयेताध्वर्युरि'ति वाक्यादिति चेत् — **सदोमानादिषु गुणैर्यष्टुरेव फलं भवेत्**। मिनुयादिति परस्मैपदश्रुत्या वाक्यरूपसामानाधिकरण्यबाधान्नाभिदध्नः पर्यन्त इति विहितक्रत्वर्थस्यान्यदीयकाम्यगुणेन बाधायोगाच्च याजमान एव कामो यदि कामयेत यजमान इति। 'आत्मने यजमानाय वा अयं कामं कामयते तमागमयतीति वचना-

दुद्गातुरपि फलम् । अकरणमन्त्रा 'आयुर्दा अग्नेऽस्यायुर्मे देही'त्यादयः समाख्यानादाध्वर्यवा इति चेत् — **यजमानेन वक्तव्याः मन्त्राः स्युः प्रत्यगाशिषः ।** तेन यजमानेनैव पठनीयाः । कर्मफलस्य यजमानगामित्वेनाग्निं प्रति तत्प्रार्थनस्य तत्कर्तृत्वौचित्यात् । ऋत्विग्भिर्दक्षिणा यजमानादर्थनीया । अतो लिङ्गात्समाख्यां बाधित्वा यजमानेन वक्तव्याः ॥६॥

'वाजस्य मा प्रसवेनेत्यादय आध्वर्यवे याजमाने च पठिताः केनचिद्वक्तव्याः । विशेषसमाख्यया यजमानेनैव वास्तु । अभ्यूहनस्याध्वर्यवत्त्वात्तत्प्रकाशकास्तेनैव वा वक्तव्या इति चेत् — **द्व्याम्नातमन्त्रा वाजस्येत्यादयः स्युर्द्वयोरपि ।** एकस्यापि मन्त्रस्य प्रकरणे द्विःपाठात्तयोश्च प्रयोगवचनोपसंग्रहात्सिद्धरूपमन्त्रस्य स्वयं प्रकरणाग्राह्यत्वात्तद्वशेनैव क्रतुमध्ये मन्त्रपाठसिद्धेः पाठद्वयस्यापि कर्तृद्वयाकांक्षायां समाख्याभ्यां द्वावपि भिन्नविषयत्वान्नियम्येते ॥७॥

वाजपेये 'क्लृप्तीर्यजमानं वाचयती'त्यत्र ज्ञश्चाज्ञश्च अज्ञ एव वा वाचनीय इति चेत्—**क्लृप्तीर्वाचयतीत्यत्र भवेद् ज्ञस्यैव वाचनम् ।** अज्ञस्य क्रत्वप्रसक्तेः । ज्ञस्यापि ब्रूहीति स्मरणोपपत्तेः ज्ञस्यैव वाचनम् ॥८॥

दर्शपूर्णमासयोराध्वर्यवे 'वत्समुपावसृजति, 'उखामधिश्रयती'त्यादिना प्रत्येकं ते ते पदार्थाः विहिताः । पुनर्याजमाने 'वत्सं चोपावसृजत्युखां चाश्रयती'त्याद्यनुकीर्त्य 'द्वादशद्वन्द्वानि । 'सम्पाद्य यजेते'ति श्रुते विशेषसमाख्यानात् द्वन्द्वसम्पादनसमानकर्तृकत्वात्मनेपदाभ्यां यजमानकर्तृत्वप्रतीतेर्यजमान एव कुर्यादिति चेत् — **'वत्सं चोपावसृजतीत्यादिरध्वर्युकर्तृकः ।** पदार्थानामाध्वर्यवे विधानात्तत्रैव कर्त्रपेक्षायामाध्वर्यत्वप्रतीते याजमानेऽनुवादमात्रत्वादध्वर्युणानुष्ठीयमानानां द्वन्द्वशः स्मारणे न प्रयोजककर्तृत्वेनापि समानकर्तृकत्वात्मनेपदयोरुपपत्तेरध्वर्युरेव कुर्यात् ॥९॥

अग्नीषोमीयपशावाध्वर्यवो यूपपरिव्याणमन्त्रः 'परिवीरसीति' क्रियमाणानुवादी हौत्रो मन्त्रो 'युवा सुवासा' इति । तौ चोदकपरम्परया कुण्डपायिनामयनाख्यसम्वत्सरसत्रे प्राप्तौ । तत्रेदं वचनं 'यो होता सोऽध्वर्युरिति' । तत्रापरित्यक्तस्वधर्मो होताध्वर्युशब्दलक्षिते तत्कार्ये विधीयत इति करणमन्त्रबाध इति चेत् — **होतुराध्वर्यवं कार्यं विरोधेऽध्वर्युताजुषः ।** अध्वर्युताजुषः । अध्व-

र्युताजुषो होतुरेककालिकमन्त्रद्वयपठनविरोधेऽऽध्वर्यवकार्यम् न हौत्रम्। प्रत्यक्ष-वचनेन तस्य तत्कार्ये विधानात्। होतुः स्वपदार्थकरणस्यानुमानिकचोदका-त्प्राप्त्या तेन तस्य वावक्ष्यत् ॥१०॥

'प्रोक्षणीरासादये'त्यादिः प्रैषः प्रोक्षण्यासादनादिः प्रैषार्थः। तदुभय-माध्वर्यवम्, समाख्यानात्। लोट् प्राप्तकालतायामिति चेत् — **प्रैषप्रैषार्थकर्त्तारौ विभिद्येते परस्परम्।** प्राप्तकालताया अप्यन्यं प्रत्येव बोध्यतया सम्बो-धनमध्यमपुरुषादिभिरन्यकर्तृत्वप्रतीतिलक्षणाल्लिङ्गात्प्रेषितुरन्यः प्रैषार्थ-कर्त्ता ॥११॥

तत्राध्वर्युः प्रैषार्थकर्त्ता, आग्नीध्रः प्रैषे पदार्थानां प्रधानत्वबहुत्वाभ्याम्, तत्राध्वर्यवसमाख्याबाधायोगात्। प्रैषस्य च तद्वैपरीत्यादिति चेत् — **तत्राध्वर्युः प्रैषकर्त्ता समाख्यानाविरोधतः।** प्रैषस्याध्वर्यवत्त्वेन तस्य तत्र साक्षात्कर्तृता। पदार्थेषु प्रयोजककर्तृतेति न क्वापि समाख्याबाधः। नाप्यग्नीदिति सम्बो-धनविरोध इति स एव प्रैषकर्त्ता ॥१२॥

'ममाग्ने वर्चो विहवेष्वस्तु इत्यग्निसमिन्धनार्थो मन्त्र आध्वर्यवः। इधानास्तनुवपुषे मेति कर्मकर्त्तुरेव प्रतीतेर्वर्चः प्रभृतिसूक्तवाक्गतायुरादिवत्-फलमध्वर्योरेव। ममेति लिङ्गादिति चेत् — **यजमानस्यैव भवेत्फलमध्वर्यु-मन्त्रगम्।** प्रधानवाक्यगतात्मनेपदश्रुत्या साङ्गप्रधानभावनाफलस्य सर्वस्य यजमानगामित्वप्रतीतेर्मम यजमानस्येति चोपचाराद् यजमान एव वाध्वर्युणा ममेत्युच्यत इति लिङ्गस्य बाधः ॥१३॥

यत्तु 'मा मा सन्ताप्तमि'त्यसन्तापनं फलतत्क्रत्वविघातार्थमध्वर्युगतमेव यजमानस्येष्टमिति श्रुतिविरोधाभावाल्लिङ्गादध्वर्योरेवेत्याह **'मा मा सन्ताप्त-मि'त्यादेः ऋत्विग्गामित्वमिष्यते** ॥१४॥

'भद्रं तन्नौ सह' इति द्विवचनस्यात्यन्तागतिकत्वादध्वर्युयजमानयोरेव तदित्याह — **'तन्नौ सहे'त्यादि मन्त्र ऋत्विजोऽपि फलं भवेत्** ॥१५॥

बर्हिस्तद्धर्माणां पूर्वोक्तमङ्गप्रधानार्थत्वमुत्तरविवक्षया प्राप्यते। **सामान्य-द्रव्यसंस्कारः सर्वप्राकृतकर्मणाम्** ॥१६॥

'बर्हिषा यूपावटमवस्तृणाती'ति श्रुते बर्हिषि तद्धर्माः कार्यास्तेषामङ्ग-प्रधानार्थत्वोक्तेरिति चेत् — **यूपावटास्तरं बर्हिर्बर्हिर्धर्मान्न गच्छति ।** प्राकृत-कार्येष्वेवातिदेशाद्धर्मप्राप्तेर्यूपावटास्तरणबर्हिषस्त्वप्राकृतकार्यत्वान्न तत्राति-देशः ॥१७॥

प्रकृतौ पवित्रार्थविधृत्यर्थं बर्हिश्चतुष्टयं तद्धर्मवदित्याह—**पवित्रार्थे विधृत्यर्थे बर्हिषी प्रकृतावपि ।** पवित्रार्थे बर्हिषी विधृत्यर्थे च पवित्रार्थे बर्हिषा प्रकृतावपि न तद्धर्मानार्च्छतः । यथा लूना सत्तासादितस्य वेद्यास्तरणे विनियोगादसंस्कृतादेव च पवित्रादि ॥१८॥

'पुरोडाशशकलमैन्द्रवायवस्य पात्रे निदधाती'त्यादौ सवनीयहविषां यागार्थानामन्यत्र विनियोगायोगात्पयस्याद्यन्तरमुत्पाद्यमिति चेत् — **सवनीय-पुरोडाशाच्छकलस्य ग्रहो भवेत् ।** पयस्यादेरित्यपि द्रष्टव्यम् । यागीयसंस्कारा-र्थत्वस्यावगमान्नान्यत्र विनियोगः ॥१९॥

'यज्ञाथर्वणं वै काम्या इष्टयः, ता उपांशु कर्त्तव्या' इति श्रुतमुपांशुत्व-मङ्गप्रधानार्थसर्वमन्त्रेषु स्यात् । 'उच्चैः प्रवर्ग्येण प्रचरन्ती'ति श्रुतोच्चैस्त्ववदिति चेत् — **उपांशुत्वं प्रधानार्थं काम्यास्विष्टिषु चोदितम् ।** ता उपांश्वितिफलार्थ-प्रधानकर्मिकायां क्रियायां श्रूयमाणमुपांशुत्वं तन्मात्र एव स्यात् । प्रवर्ग्ये तु तत्करणिकायां साङ्गभावनायामुच्चैस्त्वं श्रुतमिति विशेषः ॥२०॥

श्येने 'दृति नवनीतमाज्यं भवती'ति श्रुते पूर्वमाज्यस्याप्रकृतत्वाद् दृतिनव-नीतप्रकृतिकत्वविशिष्टं विधीयमानमाज्यं प्रकरणात्प्रधानार्थं सत्सोमं बाधत इति चेत् — **श्येनाङ्गार्थं दृतिनवनीतस्य ग्रहणं मतम् ।** अतिदेशप्राप्ताज्यानु-वादेन तत्प्रकृतिकत्वमात्रविधौ लाघवाद् यथाप्रकृति अङ्गेष्वेवेति न सोम-बाधः ॥२१॥

तत्रैव 'सह पशूनालभत 'इति विहितं साहित्यं सुत्याकालीनमग्नीषो-मीयानुबन्ध्ययोः स्थाने पुरोडाशामिक्षाभ्यामनुग्रहवचनात्, तद्वत् । श्येनवैशेषि-काङ्गत्वादाज्यमपि सुत्याकालीनाङ्गार्थमिति चेत् — **अङ्गेषु तदिदं सुत्या-**

**कालेष्वेवेति नेष्यते** । न तत्र वैशेषिकाङ्गाङ्गं सुत्याकालत्वम्, किन्तु प्रधानप्रत्यासत्तित्वकृतम् । इह तु वाक्यादविशेषेण सर्वार्थं गम्यमानं नानुमानात्सङ्कोचमर्हतीति सर्वार्थम् ॥२२॥

शाक्यानामयनं नाम षड्त्रिंशदाब्दिकम् । तत्र श्रूयते — [संस्थिते] संस्थितेऽहनि गृहपतिर्मृगयां याति, स यान् मृगान् हन्ति, तेषां तरसमयाः सवनीयाः पुरोडाशा' इति । तत्र पुरोडाशोद्देशेन तरसमयत्वविधानात्तस्य च सवनीयत्वेन विशेषणे वाक्यभेदापत्तेः सर्वपुरोडाशविषयं तरसमयत्वम् । सवनीयपदं लिङ्गसमवायात् सवनीयासवनीयविषयमनुवाद इति चेत् — **सवनीयपुरोडाशा एव स्युस्तरसात्मकाः** । सवनीयोद्देशेन तरसमयत्वमवयवाद्विधीयते । पुरोडाशपदं तु लिङ्गसमवायाद्धविर्मात्रानुवादः । अतः सवनीयपदं मुख्यार्थं भविष्यति । नापि विशिष्टानुवादकृतो वाक्यभेद इति ॥२३॥

**॥ इति लघुवार्त्तिकटीकायां तृतीयाध्यायस्याष्टमः पादः ॥**

**॥ समाप्तश्चाध्यायः ॥**

---

# अथ चतुर्थोऽध्यायः

## प्रथमः पादः

शेषशेषिविचारानन्तरं तद्धेतुकः प्रयुक्तिविचार आरब्धव्यः। स च केषुचिदधिकरणेषु क्रत्वर्थपुरुषार्थविचारद्वारा क्रियत इत्याह — **अथ प्रयुक्त्यै क्रत्वर्थपुरुषार्थविचारणा** । अथ शेषशेषिविचारानन्तरं प्रयुक्त्यै प्रयुक्तिविचाराय क्रत्वर्थपुरुषार्थविचारणा क्रियत इति शेषः। यः शेषी स सर्वः प्रयोजक इति न नियमः, किन्तु यः प्रयोजकः स शेष्येवेति । प्रयोजकत्वं नामानुष्ठापकत्वम्। तच्च यद्यपि विधेरेव तथापि यदुद्देशेन यदनुष्ठापयति तत्प्रयोजकमित्युपचर्यते।

यद्वा क्रियामनुष्ठापयन् विधिः अनन्यप्रयुक्तं तद्विशेषणमपि यत्रानुष्ठापयति स प्रयोजक ०० । यत्तु विध्यन्तरप्रयुक्तं विशेषणं तदन्येनैवानुष्ठापितत्वान्नासावनुष्ठापयन्तीत्यप्रयोजक उच्यते। यथा पुरोडाशश्रपणविधिप्रयुक्तस्य कपालस्य नोपवापविधिरिति ॥१॥

वक्ष्यमाणयोः क्रत्वर्थपुरुषार्थयोर्लक्षणमाह — **क्रत्वर्थपुरुषार्थौ तु क्रतुपुम्प्रीतिसाधनौ** । क्रतुसाधनं क्रत्वर्थं पुम्प्रीतिसाधनं पुरुषार्थम्। पुम्प्रीतिसाधनमित्यत्र द्वन्द्वैकवद्भावः, प्रीतिशब्दः पश्वादिफलोपलक्षणार्थः। तदयमर्थः — भावना कथंभावपूरकं क्रत्वर्थम्। करणं फलञ्च पुरुषार्थमिति ॥२॥

विधेयभावनाविशेषणत्वात्फलस्यापि विधेयत्वमिति चेत् — **न विधेयं फलं च स्याद्रागादेव प्रवृत्तितः** ॥३॥

गोदोहनादेः क्रतूपकारकत्वात्क्रत्वर्थत्वमपीति चेत् — **गोदोहनं न क्रत्वर्थम्** । तादर्थ्यषष्ठ्या फलकामोद्देशेन विहितस्याप्यन्योपकारकत्वाविरोधात्फलप्रयुक्तमेव, न क्रतुप्रयुक्तमिति ॥४॥

वर्णभेदेन द्रव्योद्देशेनोपायनियमः स्मर्यते । ब्राह्मणस्य याजनादिः, क्षत्रियस्य जयादिः, वैश्यस्य कृष्यादिः, शूद्रस्य सेवादिः, सर्वेषां दायादिरिति । स क्रत्वर्थ एव, अन्यथा तद्वैयर्थ्यात् । धनस्वरूपस्योपायान्तरेणापि प्राप्तेः । तत्कार्यस्य दृष्टक्षुन्निवृत्त्यादेरपि येन केनचिदर्जितात् भावात् । क्रत्वदृष्टान्त-नियमं विना भवतीत्यत्र मानाभावान्नियमेनार्ज्यमानं क्रत्वर्थमिति चेत् — **न च द्रव्यस्य चार्जनम्** । क्रत्वर्थमित्यनुषङ्गः । अर्ज्यमानद्रव्यात्पुरुषप्रीतेः प्रत्यक्षत्वा-न्नाप्रत्यक्षक्रतुशेषत्वम्, प्रकरणाभावात् । अर्जनस्य च रागप्राप्ततया अविधेयत्वात् । द्रव्यस्य क्रत्वैकान्तिकत्वे जीवनलोपात्सर्वक्रतुलोपापत्तेः । अतः पुरुषार्थो द्रव्य-परिग्रहः । क्रतोरपि पुरुषार्थत्वेन भुज्यादिवच्छेषिता । नियमस्य तु दृष्टाभावा-त्पुरुषार्थार्जनाश्रितत्वाच्च पुरुषार्थत्वम् । तथा चान्यथार्जयन् प्रत्यवेयादिति कल्पते ।।५।।

'नेक्षेतोद्यन्तमादित्यमि'त्यादि स्मृतम् । तत्र नञ आख्यातसम्बन्धेन प्रति-षेधोऽयम् । श्रुत्यर्थलाभात् । नञीक्षतिभ्यां नानीक्षणसङ्कल्पलक्षणा । प्रतिषेध-स्य प्रतियोग्याकांक्षायां क्रत्वङ्गमादित्यदर्शनं शीघ्रमुपस्थितं भवतीति तत्त-त्कालीननिषेधोऽपि तदर्थः । एवं फलं न कल्प्यमिति चेत् — **नापि नोद्यन्त-मिति** । तस्य ब्रह्मचारिणो व्रतमित्यनुष्ठेयवाचिव्रतशब्देनोपक्रमात्पर्युदास एवा-यम् । तस्य च क्रत्वङ्गत्वग्राहकाभावात् । 'एतावता हैनसा युक्तो भवती'ति वाक्यशेषावगतपापक्षयः फलमिति पुरुषार्थः ।।६।।

'स्फ्य च कपालानि चे'त्युपक्रम्य 'एतानि वै दश यज्ञायुधानीति' श्रुते यज्ञशब्देन प्रकृताग्नेयादियागानुवादेनायुधशब्दलक्षितस्फ्यादिद्रव्यं प्रदेयत्वेन विधीयते । वाक्यावैयर्थ्यायेति चेत् — **अन्यानुक्तिर्यज्ञायुधश्रुतिः** । उत्पत्त्यवगत-पुरोडाशाद्यवरुद्धत्वाद् यागानां तेषूत्पन्नशिष्टद्रव्यनिवेशायोगात् । 'यज्ञायुधानि सम्भरन्ती'ति वाक्यापेक्षितसमर्पणाय 'स्फ्येनोद्धन्ती'त्यादिवाक्यप्राप्ता-नुवादः ।।७।।

'पशुना यजेते'त्यत्र पदश्रुत्युपात्तमेकत्वं पश्वञ्जनवाक्याद् यागाङ्गमिति तदनुष्ठानेऽपि क्रत्ववैगुण्यादविवक्षितमिति चेत् — **पश्वेकत्वं श्रुतं यज्ञे कारकत्वं प्रपद्यते** । विभक्तिश्रुत्या प्रधानकारकाङ्गतया तद्द्वारा वाक्याद् यागाङ्गस्य न

पदश्रुत्या द्रव्याङ्गत्वम् । पश्चात्त्वरुणान्यायेन पार्ष्ठिको द्रव्यसम्बन्ध इति विवक्षितमेकत्वम् ॥८॥

लिङ्गं त्वलिङ्गे वृक्षादौ विपरीतलिङ्गे पिपीलकादौ च दर्शनादविवक्षितमिति चेत् — **लिङ्गमप्यस्य पशोः शब्दार्थत्वाद्विवक्षितम्** । सिंहः सिंहीत्यादौ प्रतीयमानत्वात्तत्तच्छब्दवाच्यं कारकं सात्कृतं विवक्षितम् ॥९॥

उत्तमप्रयाजादयो नादृष्टार्थाः, यागान्तरदेवताद्रव्यसंस्काररूपदृष्टप्रयोजनलाभादिति चेत् — **त्यागांशेनादृष्टमपि कुर्युः स्विष्टकृदादयः** । देवतास्मरणप्रक्षेपांशयोस्तथात्वेनापि त्यागांशस्यानन्यप्रयोजनत्वात्तदंशे दृष्टार्थः ॥१०॥

ननु प्रयुक्तिविचारस्य लक्षणार्थत्वे शेषशेषित्वविचारः । तत्र तत्राग्रे किमर्थोऽत आह — **प्रयुक्त्यर्थोपरि ग्रन्थे शेषत्वस्य विचारणा** । तद्धेतुत्वेन तद्विचार इत्यर्थः ॥११॥

'तप्ते पयसी'त्यारभ्य 'वाजिभ्यो वाजिनमि'त्यन्तवाक्यश्रुतदध्यानयनमामिक्षावाजिनोभयप्रयुक्तमुभयजनकत्वलिङ्गादामिक्षाया अप्यम्लत्वकठिनत्वाभ्यां पयसोऽर्थान्तरत्वादिति चेत् — **वाजिनं न प्रयोक्तुः स्याद् दध्यानयनकर्मणः** । आनयतेर्द्विकर्मकत्वेऽऽनयत्यर्थकर्म दध्ना व्याप्यमानतया पयसः प्रधानकर्मणः तत्पदेन परामर्शात् स्त्रीलिङ्गामिक्षापदयोर्नित्यानुवादत्वाद् 'जुषतां युज्यं पय' इति मन्त्रवर्णाच्च पय एवामिक्षा । मधुरत्वविशेषस्यैव पयस्त्वव्यञ्जकतया तदर्थं व्यभिचारिद्रवत्वानपेक्षत्वात् । अम्लत्वस्य च संस्कारकदधिधर्मत्वात् । संस्कार्यस्येव संस्कारप्रयोजकतया आमिक्षाप्रयुक्तमेव दध्यानयनम् न कटुरसवाजिनप्रयुक्तम् ॥१२॥

'एकहायन्या क्रीणाती'ति प्रकृत्य 'षट् पदान्यनुनिष्क्रामति' 'सप्तमं पदं गृह्णाति' । 'यर्हि हविर्धाने प्राची प्रवर्त्तयेयुस्तर्हि तेनाक्षमुपाञ्ज्यादि'त्यत्र श्रुतमेकहायनीनयनमन्तरेणाप्यसंयुक्तं सन्निधानाविशेषादक्षाभ्यञ्जनक्रियाभ्यां प्रयुज्यत इति चेत् — **नयनस्यैकहायन्या नाक्षस्याभ्यञ्जनक्रिया** । एकहायन्याः नयनस्याक्षाभ्यञ्जनक्रिया न प्रयोजिका । नयनस्य क्रयसाधनद्रव्यसंस्कारकता, तद्द्वारा क्रयार्थस्य तत्प्रयुक्तत्वात् ॥१३॥

'पुरोडाशकपालेन तुषानुपवपती'त्यत्र तृतीयाश्रुत्या कपालस्योपवापाङ्गत्वात्तेनापि प्रयुज्यते कपालमिति चेत् — **नोपवापः कपालस्य । पुरोडाशार्थेन** कपालेनेति तदर्थोपात्तस्य विनियोगप्रतीतेरप्रयोजकस्तुषोपवापः कपालस्य ॥१४॥

अग्नीषोमीये पशौ 'हृदयस्याग्रेऽवद्यति, 'शकृत्संप्रविध्यति', लोहितं निरस्यती'ति श्रुतम् । तत्र हृदयादिशकृल्लोहितं च पश्वालम्भप्रयोजकं सन्निधानाविशेषादिति चेत् – **न शकृल्लोहिते पशोः ।** दाशमिकन्यायेन हृदयादीनामेव हविष्ट्वात् तत्प्रकृतिः पशुस्तैरेव प्रयुज्यते । शकृल्लोहितनिरसनं तु हविषः प्रतिपत्तिः ॥१५॥

'उत्तरार्द्धात्स्विष्टकृते समवद्यती'त्यत्र श्रुतः स्विष्टकृद्यागः उत्तरार्द्धहविरन्तयोः प्रयोजकः सन्निहितानां प्रधानयागदेवताभ्यस्त्यक्तत्वादिति चेत् — **स्विष्टकृत्करणीयः स्यादाग्नेयाद्युत्तरार्द्धतः ।** उत्तरार्द्धशब्दस्यैकदेशवाचिनः सम्बन्धिद्रव्यालाभेऽर्थापर्यवसानात्सन्निहितानामेव सम्बन्धः । प्रतिपत्तित्वाद्वचनत्वाच्च विनियुक्तस्यापि विनियोगप्रयोजकः स्विष्टकृत् ॥१६॥

'प्रयाजशेषेण हवींष्यभिघारयती'ति श्रुतमभिघारणं हविःसंस्कारः । द्वितीयातृतीयाभ्यां हविषां शेषस्य चाभिघारणं प्रतिकर्मकरणत्वप्रतीतेः । उपयुक्तशेषसंस्कारादुपयोक्ष्यमाणहविः संस्कारस्य ज्यायस्त्वाच्च । ततश्च वाजपेये प्रातः सवनानुष्ठितप्रयाजशेषो 'ब्रह्मसाम्न्यालभत' इति वाक्यान्माध्यन्दिनसवने प्राजापत्यालम्भोत्कर्षपक्षे तद्वपानां सर्वपशुहृदयादीनां च संस्कारालोपाय पात्रान्तरे धर्त्तव्यो, जुह्वाः व्यापृतत्वादिति चेत् — **प्रतिपत्तिः प्रयाजाज्यावशेषस्याभिघारणम् ।** शेषप्रतिपत्तेरपेक्षितत्वात् जुह्वाः रिक्तत्वापादनेन दृष्टार्थत्वाच्च । तानपेक्षितादृष्टार्थहविःसंस्कारोऽभिघारणम् । अतः शेषप्रतिपत्तिः हविराधारनियमादार्थिकस्तत्संस्कार इति । हविःषु क्षारणेन प्रयाजशेषं संस्कुर्यादित्यर्थः । एवञ्च सन्निहितक्रतुपशुवपास्वेव क्षरणमिति । एवं हि विभक्त्योर्लाक्षणिकत्वं दृष्टार्थत्वायाश्रितं स्यात् । तच्च स्तुतशस्त्राधिकरणविरुद्धम् । औपभृतप्रथमचतुर्गृहीतस्योपरितनप्रयाजद्वयार्थस्योपांशुयाजार्थचतुर्गृहीता । आज्यादिवद्धोमेन निःशेषमाहवनीये क्षारितस्य विना वचनं शेषाप्रसङ्गात् । अतः कथमत्र विषयलाभः कथं वा सिद्धान्तसिद्धिरिति केचित् ॥१७॥

दर्शपूर्णमासयोराज्यग्रहणं प्रकृत्य श्रुतम् — 'यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तत्, यदुपभृति प्रयाजानुयाजेभ्यस्तदि'ति । तथा 'अतिहायेडो बर्हिः प्रतिसमानयते जुह्वामौपभृतमि'ति । यदिदमौपभृतस्य चतुर्थप्रयाजोपक्रमे जुह्वां समानयनं तदौपभृताज्यग्रहणस्य न प्रयोजकम् । अनुयाजार्थाज्यसंस्कारकत्वात् । प्रयाजानुयाजेभ्य इति बहुवचनस्य प्रयाजेष्वप्यन्वयेन जौहवौपभृतयोः सर्वप्रयाजविषययोर्वैकल्पिकत्वेन यदौपभृतेन प्रयाजाः क्रियन्ते, तदोपक्रम एव पश्चानामप्यर्थे औपभृतग्रहणपञ्चकस्यानीतत्वेनास्यां वेलायां तत्र प्रयाजार्थाज्याभावादिति चेत् — **प्रयोक्तौपभृताज्यस्य बर्हिः प्रति समानयः ।**

अतिहायेति वाक्येऽर्थप्राप्तसमानयने काल [वि]मात्रविधावत्यार्थविधिदृष्टार्थत्वयोर्लाभात् । तदनुरोधेन च प्रयाजाभ्यामनुयाजेभ्यश्चेति विग्रहेणोपरितनप्रयाजद्वयकरणाय क्रियमाणमानयनं प्रयोजकमौपभृताज्यग्रहणस्य । अन्यथा अनेकार्थविधिरदृष्टकल्पना च । तत्कालाप्राप्तनयनकालयोरदृष्टार्थप्रतिपत्तेश्च विधानात् । तथा चाज्ययोर्भिन्नविषयत्वात्समुच्चयः ॥१८॥

'चतुर्जुह्वां गृह्णाति' 'अष्टावुपभृति' 'चतुर्ध्रुवायामि'त्युत्पन्नाज्यानि सामर्थ्यात् सर्वार्थानि **विनियोजकवचनान्यवयुत्यवादाः ।**

यद्वा यज्जुह्वामिति वाक्यात् जौहवस्य प्रयाजार्थत्ववत् । 'यदुपभृत्यनुयाजेभ्यस्तदि'ति । वाक्यात्तस्यापि केवलानुयाजार्थत्वमिति चेत् — **व्यवस्थया प्रयाजादौन्याज्यैः स्युर्जौहवादिभिः ।** 'प्रयाजानुयाजेभ्य' इत्यनेनौपभृतस्योभयार्थत्वादितरोऽगत्यानुवादः । 'ध्रौवं तु तदि'ति तदतिरिक्तसर्वविषयम् ॥१९॥

'अष्टावुपभृती'ति वाक्येन न चतुष्ट्वविशिष्टग्रहणद्वयविधिः, लक्षणाप्रसङ्गात् । किन्त्वष्टत्वविशिष्टस्यैकस्य 'चतुर्गृहीतं जुहोती'ति सामान्यवचनं विशेषवचनेन प्रयाजानुयाजव्यतिरिक्तपरम् । न च ग्रहणहोमरूपविषयभेदादविरोधः । अष्टत्वस्य केवलग्रहणार्थत्वे वैयर्थ्येन तद्द्वारा होमार्थतया एकविषयत्वप्राप्तेरिति चेत् — **अष्टावुपभृतीत्येषा चतुःसंख्या द्वये विधिः ।** प्रधानार्थं चतुःसंख्यानां ग्रहणसंख्या बाधितुमलम् । ग्रहणमात्रार्थत्वे चोक्त एव दोषः । अतश्चतुष्ट्वद्वयलक्षणयोभयसामञ्जस्यमिति ॥२०॥

॥ इति लघुवार्त्तिकटीकायां चतुर्थाध्यायस्य प्रथमः पादः ॥

---

## द्वितीयः पादः

अग्नीषोमीये पशौ 'यूपस्य स्वरुं करोति' स्वरुणा पशुमनक्ती'ति श्रुते अञ्जनसाधनत्वेनावगतस्वरोरर्थप्राप्तादानानुवादेन यूपादिति विधौ करोतेरुपादानलक्षणा। वा चयार्थविधिश्च स्यादतः स्वरुकर्मकभावनैव विधेया। तस्याश्च करणेतिकर्त्तव्यताकांक्षायां यूपशब्दो लक्षणया खदिरादिकं करणत्वेन छेदनादिकञ्चेति चेत्—**स्वरुर्यूपानुनिष्पादी**। विशिष्टभावनाविधौ विधिगौरवाद्वाक्यार्थविधेश्चावर्जनीयतया तुल्यत्वान्मुख्ययूपशब्दमुख्यत्वाय करोतेरर्थप्राप्तादानलक्षणया तदनुवादेन यूपादिति विधानात्तदनुनिष्पन्नः शकलः स्वरुरप्रयोजकः ॥१॥

शाखामधिकृत्य 'प्राचीं शाखामाहरती'ति श्रुते प्राचीशब्दः श्रुत्या दिग्वचनः। तां प्रत्याहरेदितीति चेत् — **प्राचीमिति न दिग्वचः**। प्रतीत्यध्याहारापातात्सामानाधिकरण्याच्च शाखावादः। या प्राची शाखा तामिति ॥२॥

'शाखामाच्छिनत्ति' शाखामाहरति मूलतः शाखां परिवास्योपवेषं करोति, उपवेषेण कपालान्युपदधाति शाखया वत्सानपाकरोती'ति श्रुते छेदनादीनां वत्सापाकरणं कपालोपधानं च प्रयोजकं छेदनादिवाक्ये समूलाग्रे शाखाशब्दश्रवणात्। तस्य च परिवासनेन द्विधाकृतस्यापाकरणोपधानयोर्विनियोगादिति चेत्– **मूलं शाखानुनिष्पादि**। परिवासनवाक्ये मूलापादानकपरिवासनेन शाखां भावयेदिति। परिवासनमूलयोरग्रार्थत्वावगमात्तदर्थमूलेन क्रियमाणमुपधानमप्रयोजकं छेदनादेः। छेदनादिकमपि मूलापादानकपरिवासनार्थमित्यग्रार्थमेव। करोतिश्चोपधानार्थप्राप्तोपादानलक्षक इति ॥३॥

'सह शाखया प्रस्तरं प्रहरती'त्यत्र हरतेस्तार्तीयन्यायेन यागत्वपर्यवसानात्। तत्र च प्रस्तरप्रहरणत्वात् तत्सहमूला शाखापि तत्रैव गुणभूतेति प्रहरणप्रयोजकं शाखाया इति चेत् — **शाखायाः सह प्रहृतौ**।

'सूक्तवाकेन प्रस्तरं प्रहरती'त्यत्र मान्त्रवर्णिकदेवतासम्बन्धबलात् याग-

त्वपर्यवसानेऽपि सह शाखयेत्यत्र प्रहरणस्य प्रतिपत्तित्वात् । तत्र च प्रस्तरस्य प्रतिपाद्यतया तत्सहभूतशाखापि प्रतिपाद्यैवेत्यप्रयोजकं प्रहरणं शाखायाः ॥४॥

'अपः प्रणयती'त्युक्ता । 'प्रणीताभिर्हवींषि संयौति' । 'अन्तर्वेदि प्रणीता निनयती'ति श्रुताभ्यां संयवननिनयनाभ्यां प्रणीताः प्रयुज्यन्ते । तयोस्तत्साध्यत्वाविशेषादिति चेत् — **प्रतिपत्तिर्निनयनं प्रणीतानामपां भवेत् ।** तृतीयया संयवनशेषत्वं द्वितीयया निनयनं प्रति प्राधान्यं च प्रणीतानां प्रतीयत इति निनयनं प्रतिपत्तिस्तासामप्रयोजकम् ॥५॥

'क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छती'ति श्रुतम् । दण्डदाने तु दण्डप्रयोजकम् । 'दण्डेन दीक्षयती'ति दीक्षार्थतया कृतकरमैत्रावरुणहस्तप्रक्षेपे द्वितीयान्तशब्दनिर्दिष्टदण्डस्य प्रतिपत्तित्वादिति चेत् — **दण्डदानं प्रशास्त्रे यत्तद्दण्डस्य प्रयोजकम् ।** दण्डकर्मकदानेन मैत्रावरुणं भावयेदिति मैत्रावरुणार्थतया श्रूयमाणं न प्रतिपत्तिः । प्रशास्तुश्च स्थित्वा अनवानं प्रैषानुवचनं पठतो दण्डभावा [?] पेक्ष्यमाणदण्डस्य दानं तस्य प्रयोजकमिति । अग्नीषोमीयविकारपश्वन्तरे दीक्षाभावाय दण्ड इत्याद्यः ॥६॥

'चात्वाले कृष्णविषाणां प्रास्यती'त्यादिवाक्यश्रुतकृतकरद्रव्यप्रतिपत्तित्वाभिमतं प्रासनाद्यर्थकर्म । तादृग्द्रव्यस्य संस्कारे प्रयोजनाभावेन विनियोगभङ्गादिति चेत्—

**प्रासनं प्रतिपत्तित्वं विषाणायाः प्रपद्यते ।**
**न भजन्त्यर्थकर्मत्वं सर्वाश्च प्रतिपत्तयः ॥**

कृतकरमपि द्रव्यं स्थलाच्छादकं क्वचित्त्यक्तव्यमिति तन्नियमोऽयं विधीयते । तद्वशादेव तल्लोपे निर्वृत्तमप्यपूर्वं नश्यतीति कल्पते ॥७॥

'यत्किञ्चित्सोमलिप्तं स्यात्तेनावभृथं यन्ती'ति श्रुतेऽवभृथोद्देशेन तृतीयया साधनं सोमलिप्तं विधीयते । अन्यथा अवभृथशब्दे उद्देशलक्षणा तृतीया द्वितीयार्थलक्षिका च स्यादिति चेत् — **नयनं सोमलिप्तानां प्रतिपत्ति-**

**रितीष्यते** । 'वारुणेनैककपालेन इत्युत्पत्तिवाक्यविहितद्रव्यावरुद्धे द्रव्यविध्ययोगा यन्तीति प्रत्ययेन सोमलिप्तावभृथसम्बन्धविधौ वाक्यार्थविध्यापत्तेश्च । सोमलिप्तोद्देशे नयनं धात्वर्थो विधीयते । अवभृथदेशनयनेन सोमलिप्तं भावयेदिति ॥८॥

'समे यजेते'त्यादिकारकश्रुतयोः नापूर्वविधयः क्रियाविध्यनुपपत्तिप्राप्तत्वात् न विषमादिनिवृत्त्यर्थाः, परिसंख्यायास्त्रिदोषत्वात् । अतोऽनुवादा इति चेत् — **द्रव्यदेशादिषु विधिर्नियमात्मक इष्यते** । क्रियाविधिनाद्यक्ष[?]-प्राप्तानां द्रव्यदेशकालादीनामप्राप्तांशपरिपूरणफलकनियमविधिसम्भवान्नानुवादाः ॥९॥

'त्रैतमालभेत शुक्लानां चरुमि'त्यादौ शुक्लादेरमूर्त्तत्वेन क्वचित्क्रियासम्बधालाभेन च नियम्यत इति चेत् — **तद्वद् गुणोऽपि शुक्लादौ** । गुणविशिष्टचरोः कारकत्वात्तद्द्वारेणास्यापि परिच्छेदकतया तत्त्वोपपत्तेर्नियम एव । अयमरुणाधिकरणस्य प्रपञ्चः ॥१०॥

अवहन्तीत्यत्रावहननस्य यागसम्बन्धित्वाश्रवणाच्छुक्लचराविव द्रव्यद्वारापि तदप्रतीतेस्तण्डुलाक्षिप्तक्रियानुवाद इति चेत् — **तथावहननादिषु** । साक्षात्तत्सम्बन्धाश्रवणादपि प्रकरणात्तदपूर्वसाधने त्वाक्षिप्ते विधानान्नियमोपपत्तिः ॥११॥

प्रसङ्गात् यागहोमदानानां लक्षणान्याह — **त्यागो द्रव्यस्य यागः स्याद्देवतोद्देशपूर्वकः** । उद्देशपूर्वकस्त्यागो यागः । तत्त्वं यजिपदप्रवृत्तिनिमित्तम् । उद्देशत्यागयोः सकर्मकत्वाद् द्रव्यदेवतयोः कीर्त्तनम्, न तु यजिवाच्यतया । अप्रतिग्रहीतृत्वे सति त्यज्यमानद्रव्योद्देश्यत्वे सति विधिगम्यत्वं देवतात्वम् । विशिष्टं तु यजिवाच्यमकर्मकमेव ।

**स एव होम इत्युक्तः प्रक्षेपांशाधिको यदि** । स उद्देशपूर्वकस्त्यागः । आहवनीयादौ यः प्रक्षेपः तदंशाधिकश्चेद्धोम इत्युच्यते । **स्वीयस्य परकीयत्वापादनं दानमुच्यते** । लक्षणानीमानि भाष्ये । लोकप्रसिद्धपदार्थकत्वाद् यज्यादीनां न लक्षणया स्वकृत्यमित्यत आह — **प्रयोगप्रक्रियास्वपि** । यो देवतामु-

द्दिश्य द्रव्यं त्यजति, तेन यागचोदनार्थोऽनुष्ठितो भवति । प्रयोगोऽनुष्ठानम्, तस्य प्रकारः प्रक्रिया, तासु सूत्रयोः पदानि वर्तन्त इति शेषः । एवं होमादिष्वपि । नन्ववहननाद् यागविधानमित्युक्तम् । उत्पत्तौ तदश्रवणादित्याशङ्क्य 'यजति चोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात् [मी० सू० ४।२।२७।] 'तदुक्ते श्रवणाज्जुहोतिरासेचनाधिकः स्यात्' [मी० सू० ४।२।२८।] इति सूत्रयोवार्त्तिकोक्तं मतान्तरमाह — **वार्त्तिके त्वश्रुते यागे सौर्यादौ यागकल्पना ।** द्रव्यदेवतासम्बन्धानुपपत्तिकल्पितो यागो विहित इत्यर्थः ।

**यागे जुहोतिश्रवणं युक्तं चेति नयद्वयम् ।** यागे विहिते 'चतुरवत्तं जुहोती'ति यज्जुहोतिश्रवणं तदुत्पत्तिप्राप्तप्रक्षेपांशविधानाद् युक्तमिति न्यायद्वयं सूत्रद्वयेनोक्तमित्यर्थः ।।१४।।

'यदातिथ्यायां बर्हिस्तदुपसदां तदग्नीषोमीयस्ये'त्यत्राच्छिद्य विधीयमाने चातिथ्यायां विधिवैयर्थ्यात् । निरिष्टकोपदेशे शिष्टाचारविरोधाद् धर्मलक्षणार्थो विधिरश्ववालप्रस्तरादिप्राप्त्यर्थ इति चेत् — **आतिथ्येष्ट्युपसद्दैक्षाः स्युः साधारणबर्हिषः ।।** दैक्षोऽग्नीषोमीयः लक्षणापत्तेर्नायं पक्ष इति धर्मविशिष्टबर्हिसाधारण्यं विधिः ।।

**।। इति लघुवार्त्तिकटीकायां चतुर्थाध्यायस्य द्वितीयः पादः ।।**

---

## तृतीयः पादः

अनारभ्य श्रुतम् — 'यस्य पर्णमयी जुहूर्भवति, न स पापं श्लोकं शृणोती'त्यादि। तत्र पर्णत्वादिसत्रवद्विपरिणता अपापश्लोकश्रवणादिफलोद्देशेन क्रत्वर्थजुह्वां च विधानात्। क्रत्वर्थमपि दध्यादिवदिति चेत् — **अङ्गानां पर्णतादीनां फलं नास्त्यार्थवादिकम्**। क्रत्वर्थाभिरिति जुहूद्वारा जुहूपदानपेक्ष्य क्रत्वर्थत्वेन विधानेन न फलापेक्षा। पर्णतादीनां दध्यादाविव वाक्यद्वयाभावाच्चोभयार्थत्वम्। फलं प्रति विधीयमानस्याश्रयालाभाच्च। अतः क्रत्वर्थमेव पर्णत्वादि ॥१॥

'अपः प्रणयती'ति प्रकृत्य 'मृन्मयेन प्रतिष्ठाकामस्ये'त्यादि श्रुतम्। तथा 'बार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्यादि'ति। तत्र वारणाभीवर्त्तादि नित्यविधिमदृष्ट्वा स नेति कृत्वा वा पूर्वपक्षः।

यद्वा वारणादीनां सामान्यविधित्वान्मृन्मयस्य कामे बार्हद्गिरस्य द्वादशाहे च विशेषविधित्वादबलीयसा तेनैव निजस्यापि सिद्धिरिति चेत् — **गोदोहनादेरन्यतस्यान्नित्ये प्रणयनादिके**। अन्योद्देशेन विहितस्य सन्निहितस्याप्यन्याङ्गत्वे मानाभावान्नित्यस्याक्षेपात्सामान्यवचनाद्वा साधने प्राप्ते निमित्तश्रुतिविरोधाच्च न काम्यनैमित्तिकयोर्नित्येन सम्बन्धः। अत्र द्वादशाहे अहीने ब्राह्मणे बार्हद्गिरस्य राजन्ये पार्थुरश्म्यस्य वैश्ये रायो वाजीयस्य विधानान्नित्याभीवर्त्तस्य मूर्धावसिक्तविषयत्वमिति केचित् ॥२॥

अग्निहोत्रे 'दध्नेन्द्रियकामस्ये'ति श्रुते दधि केवलफलार्थं 'दध्ना जुहोती'-तिवाक्यस्य फलवाक्यापेक्षिताश्रयसम्बन्धबोधकत्वेन तदेकवाक्यत्वादिति चेत् — **दधि क्रतुफलार्थं स्यात्**। इन्द्रियकामाधिकरणोक्तन्यायेन सन्निधानादेवाश्रयलाभात्तस्य क्रत्वर्थत्वबोधकत्वं तादृग्दध्नः क्रतुफलेनैव फलवत्त्वञ्चेत्युभयार्थं दधि ॥३॥

ज्योतिष्टोमे 'पयोव्रतं ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्ये'ति श्रुतं पयोव्रतादि पुरुषार्थम् । व्रत्यमानद्रव्येण तत्प्रीतेर्दृष्टेस्तदाश्रितनियमस्यापि तदेव फलमिति चेत् — **क्रत्वर्थं तु पयोव्रतम्** । नियमं विनापि प्रीतिदृष्टेः सन्निहितक्रतुफलेनैव तस्य फलवत्त्वमिति जञ्जभ्यमानमन्त्रवत् क्रत्वपुरुषसंस्कारकत्वेन क्रत्वर्थ[त्व]म् ॥४॥

एकाहकाण्डे 'विश्वजिता यजेते'त्यश्रुतफलं कर्म श्रुतम्, तन्निष्फलम् । तदश्रवणात् । यागं कुर्यादिति निराकांक्षे वाक्येऽध्याहाराप्रयोगात् । पुरुषाप्रवृत्तिविधिप्रामाण्याप्रामाण्ययोरिष्टत्वात् । प्रवर्त्तनायुक्तभावनाश्रवणानुपपत्त्या फलपदाध्याहारे नष्टस्य च फलजनकत्वानुपपत्तिः । न चापूर्वद्वारकत्वादुपपत्तिः । अध्याहृते फलेऽपूर्वसिद्धिः, तत्सिद्धौ तद्द्वारा फलसिद्धिरित्यन्योन्याश्रयात् । नियोज्यस्य निषेधेष्विव सामर्थ्यादेव तत्कालजीविशक्तस्य प्राप्तेरतो निष्फलमेवंजातीयकमिति चेत् — **फलं विश्वजितः कल्प्यम्** । विधियुक्ता भावना नापुरुषार्थं धात्वर्थं भाव्यत्वेन स्वीकरोतीति । सर्वानुपपत्तिपरिहारेणाकांक्षापूरणाय फलपदाध्याहार इति सर्वाणि सफलानि कर्माणि ॥५॥

**तान्यविशेषात् सर्वार्थानीति चेत् — तदेकम्** । एकेनैवाकांक्षापूर्त्तेः ॥६॥

एकस्य विशिष्याज्ञाने सर्वार्थत्वाप्रामाण्ययोरन्यतरप्रसङ्ग इति चेत् — **स्वर्ग एव सः** ।

यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं यत्तत्सुखं स्वःपदास्पदम् । इति ।

शक्तिग्राहकार्थवादान्निरतिशयप्रीतिरूपः । प्रत्यवायपरिहाराद दुःखाभावाच्च शीघ्रोपस्थितिकः स्वर्ग एव फलं दुःखासम्भिन्नत्वं साधनसम्पादनायासरहितत्वम् । अनन्तरं दुःखाग्रस्तत्वं 'न परदारानभिगच्छेदि'त्यादिनिषेधोल्लंघनकृतदुःखशून्यत्वम् । आयासशून्यत्वस्य सुखनित्यत्वेऽप्युपपत्तिवारणायाभिलाषोपनीतमिति । अभिलाषमात्रेण स्रगादिसमवधानान्न यागादेर्व्यञ्जकत्वमिति । 'यज्ञेन विविदिषन्ती'ति वाक्येनैवंजातीयकानां ज्ञानादौ विनियोगान्न स्वर्गकल्पनेति चेत् — न, तस्यासन्निहितत्वात् । अन्यथा

दर्विहोमवद्दर्शादेरप्याकांक्षोपशमनसम्भवे प्रयाजादेरपि ज्ञानादौ विनियोगापत्तेः । अश्रुतफलानामन्यतराकांक्षया दूरस्थकर्माङ्गत्वापत्तेश्च । रात्रिसत्राणामपि विपरिणामपरिहारायार्थवादानां स्वार्थतात्पर्येण च ज्ञाने विनियोगप्रसङ्गाच्च । सर्वथापि त एवोभयलिङ्गादित्युत्तरमन्त्रे सन्निहितफलनिराकांक्षाग्निहोत्रादेरेव वचनात् ज्ञानविनियोगोक्तेश्च । तस्मात्सन्निध्यर्थं स्वर्गपदाध्याहार एवेति ॥७॥

'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ती'त्यनारभ्य श्रुतम् । ज्योतिर्गौरायुरित्यादि विधिविहिताः सुत्या रात्रयः । तत्र स्वर्गः फलमध्याहार्यः । वर्त्तमानापदेशिनः कामपदशून्यस्य वा पापश्रवणवत् प्रतिष्ठाश्रवणस्यार्थवादतया तत्रातात्पर्यादिति चेत् — **रात्रिसत्रं प्रतिष्ठार्थम्** । अध्याहारतो विपरिणामव्यवहितसम्बन्धयोर्लघुत्वात् 'ये प्रतिष्ठासन्ति, ते एता रात्रीरुपेयुरि'ति कल्पनात् फलमेव प्रतिष्ठा । अन्यार्थवादस्याऽसमवेतार्थतापातात् । पर्णत्वस्य क्रत्वर्थत्वात् प्रतिष्ठातो वैषम्यमपापश्लोकस्य ॥८॥

'सौर्यं चरुमि'त्यादावविशेषणविधिः सर्वान् प्रति प्रवृत्तत्वप्रतीत्युपपादनाय स्वर्गोऽध्याहार्यः । ब्रह्मवर्चसादिश्रवणं तु वाच्यार्थम् काष्ठाहरणवद् शाकाहरणमिति चेत् — **न सौर्ये स्वर्गकल्पना** । ब्रह्मवर्चसकामपदसमभिव्याहारलक्षणवाक्यात्तत्कामं प्रत्येव विधिप्रवृत्तेरविशेषप्रवृत्तत्वप्रतीत्यसिद्धेरन्वाचयत्वे चान्योन्याश्रयापत्तेः । श्रुतमात्रफलानि सौर्यादीनीति ॥९॥

एकस्मै वाऽन्ये यज्ञक्रतवः कामायाह्रियन्ते, सर्वेभ्यः कामेभ्यो ज्योतिष्टोमः, सर्वेभ्यः कामेभ्यः दर्शपूर्णमासावित्यतारतम्यं श्रुतम् । तत्राख्याताद्यभावेन विधिभावनयोरश्रवणात्तदध्याहारे चानुपादेयफलसम्बद्धा असन्निधिना कर्मान्तरत्वापत्तेः । सदो मानादिगोदोहनादिगुणफलसम्बन्धानुवादः । सर्वकामशब्दः स्तुत्यर्थ इति चेत् — **सर्वेभ्यः स्यात्फलविधिः** । 'सर्वेभ्य' इति वाक्यं फले कर्मविधिः स्यात् । तादर्थ्यचतुर्थ्या फलपरत्वावगमात् । कर्मणश्च स्वाङ्गाश्रितगुणफलार्थत्वस्याप्रमाणकतया तदनुवादायोगात् । फलानि प्रति कर्मणोऽध्याहृतेन तत्फलकोत्पत्तिविधिना वा विधिसम्भवात् । प्रत्यक्षाख्यातस्यैव प्रकरणान्तरन्याये विषयतयात्र तदप्रसङ्गात् उद्देश्यसाहित्यवद् फलयोर्वाक्यभेदभिया अविवक्षणात्तत्तत्फलोद्देशेन कर्मविधिः ॥१०॥

तत्रैकस्मिन् प्रयोगे सर्वाणि फलानि साधनस्याविशिष्टत्वादेकोत्पत्तौ विनिगमनाभावाच्च। न च कामनातो व्यवस्था। तस्यास्तद्वतः पुरुषस्य वा कर्मानङ्गत्वमिति नियममुद्दिश्य कर्मणो विधेयत्वात्। अत एव पुंस्त्वाविवक्षा स्वर्गकामादिवाक्ये बहुफलकामनायां तावतामेकप्रयोगोत्पाद्यत्वस्यैवमप्यवारणाच्च। तस्मात्सर्वेषां युगपदेव जन्मेति चेत् — **तेषां पर्यायतो जनिः**। विधेः समीहितफलसाधनत्वाक्षेपकतया काम्यमानस्यैकस्यैवोत्पादात्। बहुकामनायामपि सामग्रीस्वाभाव्याद् घटसामग्र्यादाविव एकफलसाधनत्वेन श्रुतकर्मण एकस्मिन् प्रयोगे तज्जातीयस्यैकस्यैवोत्पादवच्च। अत्राप्येकस्मिन् प्रयोगे एकमेव फलं स्यात् ॥११॥

चित्रादिफलं पश्वाद्यामुष्मिकमेव स्वरूपस्य प्रतिग्रहाद्युपायान्तरसाध्यत्वे नादृष्टानपेक्षतया शरीरस्यैव तदपेक्षणात् तत्तद् यागसाध्यदृष्टारज्जुशरीरोपभोग्यं पश्वादि भोग्यमपि जन्मान्तरे भविष्यतीति चेत् — **नामुष्मिकत्व— नियमश्चित्रादीनां फलेषु च** — यागात् पशुः फलं श्रूयते नैहिकं, जन्मान्तरीयं चेति। तथा चादृष्टसहितप्रतिग्रहादिना असति प्रबलप्रतिबन्धे इहापि भवितुमर्हतीत्यनियमश्चित्रादिफलानामैहिकामुष्मिकत्वयोः ॥१२॥

'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते'त्यत्र दर्शपूर्णमाससोमयोरिव स्वाराज्यपुरोधादिफलवत्त्वेन कृतकरयोः क्त्वाप्रत्यययोस्तु कालार्थः संयोग इति चेत् — **अङ्गं बृहस्पतिसवो वाजपेयक्रतौ भवेत्**। वाजपेयश्रुतेः कालोपलक्षणार्थतया अत्यन्तपारार्थ्यं वाजपेयप्रकरणबाधश्च कालविधौ स्यात्। अनुपादेयकालसम्बन्धसचिवासन्निधिना कर्मान्तरत्वे तस्यानिर्ज्ञातफलस्याग्निहोत्रशब्दवद्धर्मलक्षणया बृहस्पतिसवसधर्मकस्य वाजपेयाङ्गत्वेन विधौ प्रकरणानुग्रहादि भवतीत्यङ्गप्रयोजन एवायं सम्बन्ध इति वाजपेयप्रयोगं समाप्येदमपरं कर्त्तव्यमिति ॥१३॥

'संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपती'त्यत्र समाप्तिसंयोगान्नाङ्गाङ्गित्वसम्बन्धः, किन्तु कालार्थः, प्रकरणाच्च। षण्णामङ्गं वैमृध इति चेत् — **दर्शेन वैमृधः**। वाक्यात्पौर्णमास्यङ्गमेव, नामावास्याङ्गम् प्रकरणात्तस्य दुर्बलत्वात्। साधारणप्रयोगसमाप्तावपि षड् यागार्थत्वपक्ष इवाङ्गान्तरस्य वैशेषिकस्य

सम्भवात् । अत एव वाक्यशेषः वैमृधः । पूर्णमासे तु निर्वापः भवति । तेन पौर्णमासः सेन्द्र इति संस्थाप्य पौर्णमासीमित्यत्र द्वितीयासंयोगात्प्रधानत्रयं परिसमाप्य स्विष्टकृतः पूर्वं वैमृधः कार्यः, न तु साङ्गप्रयोगसमाप्तौ द्वितीया-संयोगे प्रधानमात्रार्थत्वस्य ता उपांशु कर्त्तव्या इत्यत्र स्थितत्वात् । यदि प्रयोग-समाप्तौ कार्यः तदा 'य इष्ट्वे'ति वाक्यात्पर्वप्रतीक्षया कार्य इति केचित् ।।१४।।

'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ती'त्यत्राप्याग्निमारुतश्रुतेरत्यन्तपारार्थ्य-वारणायाङ्गाङ्गिसम्बन्ध इति चेत् — **नानुयाजाः सौमाग्निमारुते** । आग्नि-मारुतस्य सोमाङ्गतयोपदिष्टस्यानुयाजानां च सवनीयपश्वङ्गतयातिदिष्टानां कृत-करत्वात् कालार्थः संयोगः ।।१५।।

ज्योतिष्टोमे श्रूयते—दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेति । तत्रा-प्युक्तहेतोरङ्गाङ्गिसम्बन्ध इति चेत् — **इष्ट्योर्न सोमः** । अनुपादेयमिष्ट्युत्तर-कालमुद्दिश्योपादीयमानमपि कर्म सन्निधौ त्वविभागादिति न्यायेन न कर्मा-न्तरम् । प्रकृतस्य च अ[?]फलत्वाद्दर्शपूर्णमासयोश्चाविधीयमानयोः सोमाङ्ग-त्वायोगात्कालार्थ एवायं संयोगः । यद्यपि तैत्तिरीये — 'एष वै देवरथ' इत्युपक्रम्य 'दर्शपूर्णमासाविष्ट्वा सोमेन यजत' इति दर्शादिप्रकरणे श्रुतम् । यद्यपि चाचार्यवाचस्पतिमिश्रैरनारभ्याधीतमित्युक्तम्; तथाप्येतत्सिद्धान्तसिद्धयर्थं तदुभयं सोमप्रकरणादुत्कृष्टव्यम् ।।१६।।

'वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जात' इत्युपक्रम्य यस्मिन् जात इत्यादि श्रुतम् । तद्रात्रिसत्रन्यायेन समुदितमेकं फलमित्युक्तं नामधेये । यद्यपि निमित्तफलयोर्निरपेक्षयोरुद्देश्यत्वे वाक्यभेदशङ्का; तथापि निमित्ते विधीयमान-स्यापि फलाकांक्षत्वान्नात्र तत्प्रसङ्गः । तच्च फलं पितृगामि । विधेराधानवाक्य गतात्मनेपदाच्चेति चेत् — **पुत्रस्य भवेद्वैश्वानरी फलम्** । फलप्रतिपादकवाक्य-शेषेणैव पुत्रगामित्वप्रतीतेः पितुः पुत्रगतफलाभिलाषितया विध्यात्मनेपदयोरुपपत्तेः पुत्रगाम्येव फलम् ।।१७।।

इयमिष्टिर्जननोत्तरकाल उपक्रान्तव्या । निमित्तोपजनने सति विलम्ब-हेत्वभावादिति चेत् — **प्राग्जातकर्मणो नेषा** । जातकर्मोत्कर्षे तन्मध्यपतितस्ततः प्राशनोत्कर्षापत्त्या पुत्रविपत्त्यापत्तेर्जातकर्मानन्तरमेव कर्त्तव्या ।।१८।।

जातकर्मानन्तरमेवान्तर्दशाहे शुचित्वमनपेक्ष्य कर्तव्या । नैमित्तिके प्राक्तनमुपबन्धादिति चेत् — **कर्त्तव्या न च सूतके ।** प्रयोजनविरोधान्निमित्तस्वारस्यमुल्लंघ्योत्कृत्वा [?]शौचाद्यङ्गोपसंहाराय सूतकान्ते पर्वणि कर्त्तव्या ॥१९॥

'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेत्यत्र श्रुतो बृहस्पतिसवः शरद्येव वाजपेयप्रयोगस्य 'शरदि वाजपेयेन यजेते'ति तत्र विधानात् । बृहस्पतिसवस्यापि तदङ्गत्वेन तत्कालस्योपदेशात्प्राप्तेरातिदेशिकवसन्तकालबाधादिति चेत् — **न वाजपेयकाले स्याद् बृहस्पतिसवक्रिया ।** वाजपेयकरणकफलार्थव्यापारे श्रुता शरद् तद्बहिः श्रुतबृहस्पतिसवेन भवितुमर्हति । अङ्गस्य सतोऽन्तरकरणप्रसक्तावपि कालोपसंग्रहाय न क्रियते । क्त्वाप्रत्ययश्च पूर्वकालतायामेव, नाव्यवहिततायाम् । तेनोत्पन्नमप्यपूर्वं बृहस्पतिसवप्रशंसासाध्यापूर्वेण दृढ़ीक्रियते ॥२०॥

**॥ इति लघुवार्त्तिकटीकायां चतुर्थाध्यायस्य तृतीयः पादः ॥**

---

## चतुर्थः पादः

अनुमत्यादीष्टीः, मल्हादिपशून् पवित्रादिसोमयागान, विदेवनादीन्ययागरूपाणि च प्रकृत्य श्रूयते — 'राजसूयेन स्वाराज्यकामो राजा यजेते'ति राजकर्तृकराजसूयेन स्वाराज्यं भावयेदित्यर्थः। तत्र यागानामयागानां च प्रकृतानामप्रसिद्धार्थेनापि प्रातिपदिकेन परामर्शात्। तद्वर्तितृतीयया च तेषां करणत्वप्रतीतेः स्वाराज्यरूपफलस्यावगमात्। भावनायाश्च प्रत्ययेनावगतेः यजतिर्यागायागसमुदायानुवाद इति सर्वे फलयुक्ता इति चेत् — **कर्मणां यागरूपाणां राजसूयेऽप्रधानता।** भावनाकरणं धात्वर्थः, नाम च तद्विशेषणमिति द्वितीयाद्ये स्थितत्वात्तन्नामकयागानां फलार्थतया अयागानां तदङ्गत्वम् ॥१॥

अभिषेचनीयानन्तराम्नाता अपि विदेवनाद्यभिषेकान्ताः। तदीयमाहेन्द्रस्तोत्रकाले 'माहेन्द्रस्तोत्रं प्रत्यभिषिच्यत' इति वचनेनापकृष्टाः। तदीयप्राकृताङ्गसन्दष्टतया अवान्तरप्रकरणेनाभिषेचनीयार्था इति चेत् — **सर्वस्मिन् राजसूयेऽङ्गमभिषेकावधिः क्रिया।** बर्हिर्विधानकाले प्रकरणानुद्भूतया सन्निधिमात्रबाधेन कृत्स्नराजसूयाङ्गत्वमुक्तमेव ग्राह्यम् ॥२॥

तत्रैव 'सौर्यं चरुं बभ्रुर्दक्षिणे'ति विधाय पुनः श्रुतम् 'पुरस्तादुपसदां सौम्येन प्रचरन्ती'ति। तत्र सामान्यवचनेन प्रकरणसापेक्षेण फलवियोगाद्वरमुपसदङ्गत्वम्। सौम्यस्य तादर्थ्यषष्ठ्ये'ति चेत् — **तस्मिन् भवेन्न सौम्यस्य चरोरुपसदङ्गता।** पुरस्ताच्छब्दोपात्तकालस्य अवश्यविधेयतया अनुत्पत्तिविधावनेकविध्यशक्तेः नाङ्गत्वविधानमिति कालार्थ एव संयोगः ॥३॥

आमनहोमाः 'साङ्ग्रहण्या यजेत ग्रामकाम' इति प्रकृत्य श्रुताः। सांग्रहणीफलपदानुषङ्गेण तदीयार्थवादादिकेन वा फलार्थाः। इष्टेः प्राकृताङ्गनिराकांक्षत्वादिति चेत् — **अङ्गमामनहोमाः स्युः।** सकृदाम्नातस्यात्यन्तागतिकतया क्वचिदनुषङ्गेण इह परिधिमन्त्रप्र[?]चेतत्वेन तदयोगात्। सन्निधि-

प्रमाणेनाङ्गत्वसम्भवाच्च । प्राकृताङ्गसन्दंशविहितस्य प्रकरणोद्भूतेश्चार्थवादस्य स्वार्थतात्पर्याच्च ।।४।।

ज्योतिष्टोमे 'यां वै कांश्चिदध्वर्युश्च यजमानश्च देवतामन्तरीतस्तस्या आवृश्चेते यत्प्राजापत्यं दधिग्रहं गृह्णीयादि'त्युक्त्वा'पुनः श्रूयते — 'ज्येष्ठो वा एष ग्रहाणां यस्यैष गृह्यत' इति। तत्र देवतान्तरे निमित्ते ज्येष्ठत्वेन च श्रुतत्वात् दधिग्रहो नित्यो, नैमित्तिकश्च ज्येष्ठत्वं प्रशस्तत्वं सर्वेभ्यः प्रथमग्राह्यत्वं वा नानित्ये भवेदिति चेत् — **नित्ये एव दधिग्रहः**। एवकारो नैमित्तित्वव्युदासाय यदिशब्दाद्यभावेनान्तरीयस्य निमित्तत्वप्रतीत्यार्थवादत्वात् । उक्तयुक्त्या नित्यत्वम् । 'दधिग्रहं गृह्णीयात्पशुकामस्ये'त्यपि वचनात्काम्यत्वमपि ।।५।।

अग्नौ श्रुतम् — 'यो वै सम्वत्सरमुख्यमभृत्वाग्निं चिनुते' 'यथा सामि गर्भो विपद्यते तादृगेव तदार्त्तिमार्च्छेत्' । 'वैश्वानरं द्वादशकपालं पुरस्तान्निर्वपेदि'ति । अत्रापि सम्वत्सराभ[व]रणस्य श्रुतिमात्रत्वादिष्टिर्नित्येति चेत् — **यो वै सम्वत्सरमिति क्रिया नैमित्तिकी भवेत्** । कर्त्तृसमभिव्याहृतयच्छब्दस्य निमित्तबोधकत्वान्नैमित्तिकीष्टिः ।।६।।

'योऽग्निं चित्वा न प्रतितिष्ठति, पञ्चपूर्वाश्चितयो भवन्त्यथ षष्ठीं चितिं चिनुते प्रतिष्ठित्या' इति। अत्र षष्ठी चितिर्नित्या। अन्यथा पूरणार्थप्रत्ययस्यैकस्यामसम्भवादिति चेत्— **तथा षष्ठी चितिः**। नैमित्तिकी षष्ठी। कर्त्तृवाचियच्छब्दोक्ता प्रतिष्ठित्यां निमित्ते विधानात् । प्रत्ययस्तु पूर्वविहितचित्यभिन्नक्रियापेक्षयाप्युपपन्नः । नित्याः पञ्च चितयः पूर्वाः इयमेकैव भिन्ना निमित्ते विधीयते ।।७।।

'अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ती'त्यनारभ्याधीतः पितृयज्ञोऽमावास्याशब्दाभिधेयदर्शाङ्गं वाक्यात् कालसाधारण्येऽपि तस्य फलकल्पनापरिहारायेह कर्मवाचितैव । प्रातरपि दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्म इत्यङ्गत्वमाह । अनाहिताग्नेस्तु पुरुषार्थं इति चेत् — **दर्शे पितृयज्ञस्य नाङ्गता**। अकाले शक्तस्तु तद्योगात्कर्मणि लाक्षणिकोऽमावास्याशब्दः । न चेह लाक्षणिकग्रहणं युक्तम्। अपराह्णशब्दसामानाधिकरण्यादपि कालपरत्वमित्यनङ्गं पितृयज्ञः। वचनं तु मासिश्राद्धं दर्शे एवाहिताग्निना कर्त्तव्यमित्येवं परम् ।।८।।

'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयपशुमुपाकरोती'ति प्रकृतिप्राप्तरशनातो द्वितीया समाम्नाता। सा पश्वनपक्रमणार्था, पश्वङ्गस्य दृष्टार्थत्वात् न यूपार्था, तत्रादृष्टार्थतापतात्। तथा च त्रिवृद्युक्तमाग्नेयमुपाकरोतीत्यन्वयः। त्रिवृत्पदे तृतीया यूपपदे द्वितीया च स्थाणौ पशोरनपक्रमणाय वेष्टनमर्थसिद्धमनुवदतीति सर्वमेव दृष्टार्थमिति चेत् — **रशना सवनीयस्य यूपसंस्काररूपिणी**। द्वितीयातृतीयाभ्यां स्पष्टं यूपार्थत्वावगमात्। तदर्थत्वेऽपि मध्यबन्धनं अस्पन्दाद्यर्थतया दृष्टार्थत्वात् यूपार्था च रशना ॥९॥

'यूपस्य स्वरुमि'ति तादर्थ्यषष्ठ्या यूपार्थः स्वरुरिति चेत् — **स्वरोः पश्वञ्जनार्थत्वान्नैव यूपार्थता मता**। 'स्वरुणा पशुमक्ते'ति पश्वञ्जनार्थत्वस्य स्फुटत्वात् यूपस्येति यूपादुपादत्त इति पूर्वोक्त एवार्थ ॥१०॥

'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'त्यत्राघारादिसमिष्टियजुरन्ताः [इष्टिपशुसोमान्ताः] यावन्तो यागास्ते सर्वे यजिनोपाख्यातेन फले विधीयन्ते। नामपदं च विद्वद्वाक्याभ्यां समुदायद्वयकरणेऽपि नाख्यातमवच्छेत्तुमलम्। तत्परतन्त्रत्वाद् राजसूयनामवत्। तथा च सुबन्तप्रतिरूपकमव्ययं नाम सर्वयागेषु सामानाधिकरण्याद् वर्त्तत इति चेत् — **प्राधान्यमिष्ट्योर्यागानां षण्णां स्यात्कालयोगिनाम्**। प्रातिपदिकस्य कालयुक्तेषु षट्सु प्रसिद्धेः। द्विवचनस्यापि विद्वद्वाक्यकृत्वद्वित्वार्थताया प्रसिद्धार्थत्वात् राजसूयवैलक्षण्याय नामपदादाख्यातमवच्छिद्य स्वसात्करोतीति। तन्नामकयागानामेव फलसम्बन्धः। **अन्येषां प्रकरणात्तदङ्गत्वम्** ॥११॥

दीक्षणीयादीष्टिपशुसोमयागान् प्रकृत्य 'ज्योतिष्टोमेन स्वर्गकामो यजेते'ति श्रुतम्। तत्र सन्निधानाविशेषात्सर्वयागानां फलेन सम्बन्धः। नामपदमपि न कुत्रचिद् यागे प्रसिद्धम्। 'त्रिवृत्पञ्चदशः सप्तदश एकविंशः। एतानि वा तानि ज्योतींषि य एतस्य स्तोमाः' इत्यस्यार्थवादतया न स्तोमेषु ज्योतिःशब्दाभिधेयत्वपरत्वम्। तथात्वे वा सर्वयागानां फलसम्बन्धेन प्राधान्यात्। स्तोमपरिच्छिन्नप्रगीतमन्त्रसाध्यस्तोत्राणि सर्वयागाङ्गानीति तद्द्वारा स्तोमानामपि सर्वयागसम्बन्धात्सर्वेषां ज्योतिष्टोमनामतापत्तेः। 'गृहं वा गृहीत्वा चमसोन्नीय स्तोत्रमुपाकरोती'त्यत्रापि स्तोत्रग्रहणयोः कृत्तीर्थयोः कालार्थः संयोग इति न तद्-

वशेनापि कस्यचित् यागस्य विशिष्य स्तोत्रसम्बन्ध इति नामाख्यातयोः सर्वयाग-विषयत्वात्सर्वे फलार्था इति चेत् — **सोमयागस्यैव भवेत् ज्योतिष्टोमे प्रधा-नता ।** यद्यपि नामप्रवृत्तिवेलायां सर्वयागानां फलासम्बन्धान्न कस्यापि प्रकरण-मुद्भूतमिति । न कस्यापि स्तोत्रद्वारा स्तोमसम्बन्धः, तथापि सोमयागाङ्ग-ग्रहणस्य स्तोत्रोपाकरणस्य च कालार्थेऽपि संयोगे स्तोत्रोपाकरणसमानकर्तृक-ग्रहणाङ्गवत्त्वरूपपरम्परासम्बन्धात् । तन्नामकत्वं सोमयागानामेवेति तेषामेव फलम् । अन्ये त्वफलास्तदङ्गानीति ॥१२॥

**॥ इति लघुवार्त्तिकटीकायां चतुर्थाध्यायस्य चतुर्थः पादः ॥**

**॥ अध्यायश्च समाप्तः ॥**

---

## अथ पञ्चमोऽध्यायः

### प्रथमः पादः

एवं प्रयोज्यप्रयोजकविचारे कृते प्रयोज्यपदार्थानां श्रुत्यर्थपाठप्रवृत्तिस्थानमुख्यक्रमैः क्रमो निरूप्यते। प्रयोगप्राशुभावायैच्छिक एव क्रमः पदार्थेषु न वैदिकः। तस्य विलम्बितप्रतीतिकत्वादिति चेत् — **श्रुतिलक्षण एव स्याद् अर्थानां नियतः क्रमः।** वेदप्रमाणक एव क्रमः स्यात्, तत्प्रामाण्यस्य स्थितत्वात् ॥१॥

अव्यापारात्मकः क्रमो दध्यादिवन्न स्वतो विधेयः। नापि व्यापारविशेषणतयैकस्य क्रमानाश्रयत्वात्। तत्समुदायस्याविधेयत्वादिति चेत् — **विशेषणतयार्थानां क्रमः स्वविधिमर्हति।** न सन्धानस्य नाप्येकैकस्य क्रमः। अनेकानि परस्परं मिलितानि संयोगद्वित्वादिवत् श्रुत्याद्युपस्थापितक्रमवन्ति क्रमाणि प्रयोगविधिना विधीयन्ते ॥२॥

सत्रात्मकद्वादशाहे 'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति। तत उद्गातारं ततो होतारम्, तं प्रतिप्रस्थाता दीक्षयती'त्याद्यारभ्य ब्रह्मचार्याचार्यप्रेषित इत्यन्तः श्रुतः। तत्र धात्वर्थविधिविवक्षया दीक्षैव विधेया। क्रमस्तु पाठप्राप्तानुवाद इति चेत् — **श्रुत्या दीक्षयित्वेति क्रमश्चैव विधीयते।** 'ऋद्धिकामाः सत्रमासीरन्'। 'ये यजमानास्ते ऋत्विज' इति वचनाच्च सर्वेषां यजमानत्वावगमात् चोदकत एव तेषां दीक्षाप्राप्तेराध्वर्यवादिनियमस्यापि तत एव इतरमन्यत्तेषाम्, यतो विशेषः स्यादितिन्यायाच्च प्राप्तेरध्वर्यवादिषु चाध्वर्योः 'चित्पतिस्त्वे'ति मन्त्रलिङ्गविरोधात् 'न पूतः पावयेदि'ति प्रतिबन्धाच्चाप्राप्तेः क्त्वा ततः श्रुत्यभिहितः क्रम एव तेन तेन वाक्येन विधीयते ॥३॥

'अग्निहोत्रं जुहोति' 'यवागूं पचती'त्यत्र क्रमप्रमाणाभावात् पाकहोमयोरनियतः क्रम इति चेत् — **अग्निहोत्रयवाग्वादावर्थात्सिध्यत् क्रमो मतः।**

पाकस्य श्रुतिलिङ्गाभ्यां यवाग्वर्थत्वावगमात् । तस्या अपि होम्यद्रव्यत्वात् पक्त्वैव तया होमः ॥४॥

प्रयाजानुमन्त्रणमन्त्राः शाखाभेदेन श्रुताः । 'वसन्तमृतूनां प्रीणामी'-त्यादयः क्वचित् । क्वचिदेको ममैका तस्येत्यादयः । तयोरदृष्टार्थत्वात्समुच्चये सति प्रथमप्रयाजानुमन्त्रणप्रवृत्तिक्रमात् क्रम इति चेत् — **सर्वेषां क्रममानानामभावेऽनियतः क्रमः** । भिन्नशाखागतयोः परस्परप्रत्यासत्तेरविधानादनियम एव ॥५॥

'समिधो यजती'त्यादिक्रमेणाम्नाताः, न तत्क्रमेण कर्त्तव्या, उक्तप्रमाणयोरभावात् । पाठस्य चाप्रमाणत्वादिति चेत् — **पाठक्रमाद्विधीनां स्यात्समिद्यागादिषु क्रमः** । क्रमपठितगन्धपुष्पादिषु तत्तथैवानुष्ठानदर्शनादनुष्ठानकालापेक्षितस्मृतीरध्ययनविधिविहितनियतक्रमपठिता विधयः क्रमेण कुर्वे इति तत्पाठक्रमात्स्मृतिक्रमे तत्क्रमादनुष्ठानक्रमः । यद्यप्यनुष्ठानापेक्षस्मृत्येकप्रयोजनयाज्यापाठक्रमादेव तदुपपत्तौ विधानैकप्रयोजनविधिपाठक्रम्ये नादरणीयः । न च देवतामात्रस्मारकमन्त्रस्य यागस्मृत्यसामर्थ्यं शङ्कनीयम् । मन्त्रस्तु विरोध इत्यत्रापि तदनापत्तेः । यदि च देवतास्मृतिद्वारा तत्सम्बन्धियागस्मारकत्वं तत्र । तदत्रापि तुल्यम्, तथापि यत्र क्रमविहितयागेषु विशकलितपठितमन्त्राणां लिङ्गवाक्यादिना विनियोगः, तादृग्विधिपाठक्रम उदाहार्यः ॥६॥

'सप्तदश प्राजापत्यानि'ति विहितप्राजापत्येषूपाकरणादयः सन्निपातितः प्रतिपशुभेदेन पदार्थानुसमयरूपेण कर्त्तव्याः । तत्रोपाकरणं कुतश्चिदारभ्य कुत्रश्चित्समाप्यम् । एवं नियोजनादावप्यनियमः । नियामकश्रुत्याद्यभावात् प्रावृत्तिक पदार्थप्रवृत्तेः पौरुषेयत्वादिति चेत् — **प्राजापत्यपदार्थेषु सः प्रवृत्तिक्रमाद् भवेत्** । 'वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ती'ति वचनावगतपश्वन्तरसाहित्यबलात् सर्वे पदार्थाः मिथः प्रत्यासन्नाः कार्याः । षोडशभिर्व्यवधानेन विना करणाशक्तेरधिकव्यवधानवारणाय प्रवृत्त्या नियमः ॥७॥

साद्यस्के 'सह पशूनालभत' इति श्रुते सवनीयस्थाने साहित्यं प्रधानप्रत्यासत्तेरिति स्थिते उपाकरणादिष्वनियमाग्नीषोमीयप्राथम्यं वा प्रकृतौ दृष्टेरिति चेत् — **साद्यस्क सवनीयस्य स्थाने न प्रथमं क्रिया** । आश्विनग्रहग्रहणेन

सवनीय उपस्थापितः। इतरयोस्त्वग्नीषोमीयप्रणयनावभृथावुपस्थापकौ नात्र सः। 'साहित्यवचनात्सवनीयानन्तरमुपाकर्त्तव्यौ'तयोरनियमः क्रमस्य । प्रकृति-दृष्टाग्नीषोमीयप्राथम्यं वा ॥८॥

'सारस्वतौ भवत एतद्वै दैव्यं मिथुनं यत्सरस्वतीसरस्वांश्चे'त्यत्र याज्या-पाठक्रमात्स्त्रीदैवत्ययागः प्रथमः पुंदैवत्यः पश्चात्। तत्र चोदकप्राप्तनिर्वापा-दावनियम इति चेत् — **सारस्वते पदार्थानां भवेन्मुख्यक्रमात्क्रमः**। अङ्ग-प्रधानयोरवर्जनीयव्यवध्यधिकव्यवधिवारणाय मुख्यक्रमादङ्गक्रमः। अत्र यद्यपि याज्यानुवाक्याप्रवृत्तिक्रमात्प्रत्यासत्त्यनुग्रहाविशेषे पूर्वेषामपि निर्वापादीनां क्रमः सिद्ध्यतीति नेदमसङ्कीर्णोदाहरणम्; तथापि दर्शे दध्नः पूर्वं धर्माः शाखाहर-णादयः प्रवृत्ताः। तत आग्नेयस्य निर्वापादयः। याज्यानुवाक्ययोस्तु विपरीता प्रवृत्तिः, पाठवशात्। तत्र प्रवृत्तेरैकरूप्याभावात्। प्रयाजशेषेण हविरभिघारणेऽनियमप्राप्तौ मुख्यक्रमात् प्रथममाग्नेयस्येति सिद्ध्यति ॥९॥

दर्शपूर्णमासयोराग्नेयानन्तरमाज्यहविरुपांशुयाजः ततोऽग्नीषोमीयः पुरो-डाशहविः। तत्र मुख्यक्रमाच्चरमपठिता अप्याज्यनिर्वापादयोऽग्नीषोमीयनिर्वा-पादिभ्यः पूर्वं कार्या इति चेत् — **क्रमो मुख्यक्रमात्पाठगोचरो बलवान्मतः**। मुख्यक्रमाधिगमपूर्वकत्वादङ्गेषु तदधीनक्रमस्य विलम्बितप्रतीतिकत्वम्' पाठ-स्त्वन्यानपेक्षक्रम इति स एव कार्यः ॥१०॥

दर्शादावग्नीषोमीयब्राह्मणं पूर्वं पश्चादाग्नेयस्य। मन्त्रयोस्तु होत्रे विपरीत-क्रमः। तत्र विधिक्रम उत्पत्तिवेलायामवगतो बलवान्। उत्पत्त्यनन्तरं मन्त्र-विनियोगमपेक्ष्य पश्चान्मन्त्राधीना क्रमः। प्रधानेषु बुध्यमानो दुर्बल इति चेत् — **विधिपाठक्रमादेव मन्त्रपाठक्रमो बली**। स्मृत्यनपेक्ष्य प्रयोजनमन्त्र-क्रमादेव प्रधानक्रमः। तदभावे विधिक्रमोऽपि नियामक इत्युक्तम् ॥११॥

'आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्' 'सरस्वत्याज्यभागा स्यात्' 'बार्हस्पत्यश्चरुः' इत्यत्र प्रयोगवचनावगताङ्गप्रधानप्रत्यासत्त्यानुग्रहाय मुख्य-क्रमेणाज्यधर्माः पुरः कार्याः, बार्हस्पत्यौषधधर्माः पश्चात्। उपदेशात्मक-प्रयोगवचनेन चोदकबाधादिति चेत्—**वैकृतद्रव्यधर्माणां चोदकाधिगतः क्रमः**। चोदकप्राप्त्युत्तरकालं प्रयोगविधिः कल्प्यः। पदार्थास्तु प्राप्यमाणाः क्रमविशिष्टा

एव प्रथन्त इति नैराकांक्ष्यात्, न तदुपजीविकल्प्यप्रयोगवचनाश्रयः क्रमो ग्राह्यः ।।१२।।

चातुर्मास्येषु साकमेधाख्ये पर्वणि श्रूयते — 'अग्नयेऽनीकवते पुरोडाशमष्टाकपालं प्रातर्निर्वपेत्, मरुद्भ्यः, सान्तपनेभ्यो मध्यन्दिने चरुम्, मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायं [ओदनं] चरुमि'ति । तत्र प्रकृतिप्राप्तद्व्यहकालत्वाबाधायाद्यतनेषु प्रातरादिषूपक्रम्य श्वस्तनेषु प्रातरादिषु समापनीयाः । 'य इष्ट्ये'त्यत्र तु साङ्गस्य पर्वकालत्वं प्रत्यक्षश्रुतमातिदेशिकद्व्यहकालत्वविरुद्धमित्यतिदिष्टबाधः नेह तथा विरोधाभावादिति चेत् — **प्रातर्मध्यन्दिने सायमेकस्यैवाह्न इष्टयः** एकस्यैवाह्नः प्रातरादाविष्टयः । चिकीर्षितप्रयोगार्थोपात्तप्रातरादेरविशेषात्सर्वार्थत्वं, नैकदेशार्थत्वमित्येकस्मिन् प्रातरादावुः यदिष्टस्य नातिदिष्टद्व्यहकालता ।।१३।।

अग्नीषोमीयपशौ प्रकृतितो हविरासादनकालप्राप्तप्रयाजानामपकर्षः श्रुतः । 'तिष्ठन्तं पशुं प्रयजन्ती'ति । तथा सवनीयेऽनूयाजानामुत्कर्षः । 'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ती'ति । तत्र श्रुतमात्रस्यैवोत्कर्षापकर्षश्च नाधिकस्याप्रमाणकत्वादिति चेत्—**स्यातामुत्कर्षापकर्षौ तदादिकं तदन्तयोः ।** क्रमविशिष्टत्वेन चोदकप्राप्तानां क्रमबाधे वैगुण्यापत्तेस्तदाद्युत्कर्षः तदन्तापकर्षश्च ।।१४।।

प्रातरनुवाकप्रैषं होत्रे दत्वा ततः 'प्रतिप्रस्थातः सवनीयान्निर्वपस्वेति । प्रेष्यतीति विधायानन्तरं प्रचरणी होमाद्याः सौमिका विहिताः । तत्र प्रैषवशान्निर्वापस्तदैव कार्यः । तदनन्तरमेव सौमिकाः प्रचरणी होमादयो अग्नीन् विहर' 'बर्हिस्तृणीहि' पुरोडाशानलङ्कुर्वि'ति प्रैषादधस्तनाः कार्याः । व्रीहिप्रोक्षणादयोऽलङ्करणान्ता वा निर्वापप्रैषव्यवहितसौमिकोपस्थापकाभवात् । निर्वापस्यान्यकर्तृकस्याध्वर्युकर्तृकप्रोक्षणाद्यनुपस्थापकत्वादिति चेत्—**सवनीयाः सौमिकेभ्यः प्राक्स्य निर्वापबोधिताः ।** निर्वापेऽध्वर्य्योरपि प्रयोजककर्तृत्वात् । तदुपस्थापितप्रोक्षणानन्तरं प्रचरण्यादयः ।।१५।।

ज्योतिष्टोमेऽग्नीषोमीयप्रणयनात् परतः पशुधर्मा यूपच्छेदादय आम्नाताः । 'दीक्षासु यूपं छिनत्ती'त्यनेनापकृष्यमाणाः प्राचोऽप्यपकर्षेयुरिति चेत् — **यूप-**

**कर्मापकर्षे स्यान्न प्राचामपकर्षणम्** । एकप्रयोगवचनपरिगृहीतानां परस्पर-क्रमाङ्गमिति तदलोपायापकर्षः स्यात्, नहि तदस्ति प्रणयनीयस्य सौमिकत्वात् । अतः श्रुतमात्रापकर्षः ।।१६।।

सवनीयपशुतन्त्रं सवनीयपुरोडाशेषु प्रसज्यत इति वक्ष्यते । तत्राग्निमारुतादूर्ध्वमनूयाजेषु कृष्यमाणेषु तत्परभाविनोः पिष्टलेपफलीकरणहोमयोरप्युत्कर्ष इति चेत् — **अनूयाजोत्कर्षणेऽपि नोत्कृष्यौ दक्षिणाग्निकौ** । अत्रापि भिन्नप्रयोगवचनपरिगृहीतयोः क्रमस्यानङ्गत्वात् । न पिष्टलेपहोमाद्युत्कर्षः ।।१७।।

दर्शादौ हविरधिवासनोत्तरमाम्नाता वेदिः । 'पूर्वेद्युरमावास्यायां वेदं कृत्वा वेदिं करोती'ति वचनेनापकृष्यमाणपाठतः क्लृप्तक्रमाबाधाय प्राचोऽप्यपकर्षेदिति चेत् — **दर्शे वेद्यपकर्षेऽपि न प्राचामपकर्षणम्** । पाठोपस्थितस्य प्रकरणादुभयार्थत्वात्पूर्वं कृत्वाश्रुत्युपस्थितस्यामावास्यायां वाक्येन विशिष्य विनियोगात् क्रमक्लृप्तेः पूर्वमपकृष्यमाणा वेदिः, न प्राचामपकर्षणायालम् । पाठोपस्थाप्यक्रमस्य पौर्णमास्यां निवेशः ।।१८।।

'मरुद्भ्यः सान्तपनेभ्यो माध्यन्दिने चरुमि'ति श्रुता सान्तपनीया दैवात् मानुषाद्वा प्रति बलादुत्कृष्यमाणाग्निहोत्रमुत्कर्षेत् क्रमस्यानङ्गत्वेऽप्येककालपतितयोर्युगपदनुष्ठानायोगात् । वैपरीत्ये त्वग्निहोत्रस्य मन्त्रवत् प्रणयनबाधादिति चेत् — **उत्कर्षो नाग्निहोत्रस्य भवेत्सान्तपनीयया** । अनुपादेयस्य निमित्तविशेषणकालस्य बाधायोगात् । उपादेयाङ्गस्य मन्त्रस्य वैकल्येऽप्यग्निहोत्रं कृत्वैव सान्तपनीया स्यात् ।।१९।।

'तं पराञ्चमुक्थ्येभ्यो निगृह्णाति षोडशिनमि'ति षोडशिनं प्रकृत्य श्रुतम् । तत्रोक्थ्यादीनां दैवादुत्कर्षे षोडशिनोत्कृष्टव्यः । अन्यथा 'ग्रहं वा गृहीत्वे'ति वचनात् तत्स्तोत्रमप्युत्कृष्येत । तथा च 'समयाध्युषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोती'ति श्रुतस्तोत्रकालोऽनुपादेयो बाध्येत । उक्थ्यपरभावस्तु क्रममात्रं बाध्यतामिति चेत् — **उक्थ्ये न स्यात्षोडशिन उत्कर्षस्तत्पराक्रिया** । क्रमोऽपि तत्परभावः प्रधानयागाङ्गम् । कालस्तु तदङ्गस्तोत्राङ्गम् । तथा चाङ्गगुणविरोधन्यायात् कालस्य बाधा, न क्रमस्येत्युत्कर्षः ।।२०।।

**।। इति लघुवार्त्तिकटीकायां पञ्चमाध्यायस्य प्रथमः पादः ।।**

---

## द्वितीयः पादः

वाजपेये 'सप्तदश प्राजापत्याः सह कार्याः 'वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ती'त्युपादेयपशुसाहित्यस्य विवक्षितत्वात्। तत्रारादुपकारकं तन्त्रं उपाकरणादीनि द्रव्यसंस्कारकाणि प्रतिकर्मावसायि चोदकैरव्यवेततया प्रापितत्वात् साहित्यविधायिप्रयोगवचनाच्चैकैकस्मिन् काण्डतः समाप्यानि। आरादुपकारकाङ्गविषयं साहित्यवचनमिति चेत् — **स्यात्पदार्थानुसमयः प्राजापत्यपशुव्रजे**। चोदकस्यानुमानिकत्वात् प्रयोगवचनस्य च कल्प्यत्वान्न प्रत्यक्षवचनसंकोचकत्वमिति एकैकेनानुसमय उपाकरणादीनाम् ॥ :॥

नन्वेवमश्वप्रतिग्रहेष्टावपि पुरोडाशाधिश्रयणादीनामाग्नेयादिष्विव पदार्थानुसमयः स्यादिति चेत् — **सहस्राद्यश्वदाने च काण्डानुसमयो भवेत्**। सहस्राद्यश्वदाने निमित्ते पौण्डरीकादौ वा [?] चतुष्कपालेऽष्टौ वा तावत्सु पुरोडाशेष्वधिश्रयणीयेष्वाद्यानां भस्मीभावः स्यादित्यसम्भवतां काण्डानुसमयः ॥२॥

दर्शपूर्णमासयोराग्नेयाग्नीषोमीयनिर्वापयोः पदार्थानुसमये स्थिते एकैकेन मुष्टिनानुसमेयः प्रतिमुष्टीयत्तादर्शनादिति चेत् — **एकैकेनानुसमयो मुष्ट्यादिषु न युज्यते**। पदार्थो नामैकविधिविहितमङ्गम् 'चतुरो मुष्टीन्निर्वपती'ति चतुर्मुष्टिनिर्वापविधानात्। तेनैवानुसमयः। एवमाग्नेयकपालान्युपधायान्येषामुपधानम्। एवमवदानाञ्जनयोरपि ॥३॥

'द्विर्हविषोऽवद्यती'त्येकविधिविहितद्व्यवदानमेकस्य कृत्वा अहुत्वैवापरस्य कर्त्तव्यमिति चेत् — **अवदानं प्रदानान्तम्**। 'चतुरवत्तं जुहोती'ति विध्यर्थप्राप्तावदानमुद्दिश्य हविषो द्विरिति नियममात्रं विधीयते। द्वित्वविशिष्टावदानविधावपि दृष्टार्थत्वाय होमावयवत्वेन विधानमिति प्रदानान्तं नानुसमयः ॥४॥

अग्नीषोमीये यूपधर्माः अञ्जनोच्छ्रयणादयो यूपैकादशिन्यादौ चोदकेन प्राप्ताः प्रतियूपमेकैकशः कार्याः । अञ्जनादिपरिव्याणान्तानवसर्गवचनस्य प्रकृतार्थिकत्वेनानतिदेशादिति चेत् — **आपरिव्याणमञ्जनम्** । नित्यवदप्राप्तेर्वचनार्थवत्त्वाय यजमानानवसर्गविध्यनुरोधेन परिव्याणान्तेनानुसमयः ॥५॥

अग्नीषोमीयपशावप्रदा[अवदा]नानन्तरं प्रदानप्राप्तौ वचनम् 'दैवतान्यवदाय न तावत्येव होतव्यम्' सौविष्टकृतान्यवद्यति सौविष्टकृतान्यवदाय न तावत्येव होतव्यम् ऐडान्यवद्यती'ति । तदेकदैवतेषु पशुगणेष्वेकस्य पशोः दैवतसौविष्टकृतैडान्यवदायापरस्यापि तथा कार्यम् । अन्यथा तेषां नैरन्तर्यप्रापकचोदकबाधापत्तेरिति चेत् — **प्राजापत्यावदानानां न काण्डानुसमीयत** । पदार्थाः मिथः संश्लिष्टाः कर्त्तव्या इति प्रकृतावर्थः । पश्वेकत्वात्तेषामानन्तर्यमधिकम् । अत्र तु वाचनिकसाहित्यम् ॥६॥

राजसूये नाना बीजेष्टयः 'अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणाम्' 'सोमाय वनस्पतये श्यामाकं चरुमि'त्यादय आम्नाताः । तत्र कृष्णाजिनास्तरणोलूखलाधिवर्त्तनबीजावापावघातपरावपणविवेचनफलीकरणानि पृथक् [पृथक्] समर्थत्वात् पृथगनुसमेयानि । उलूखलमुसलभेदेन विना तदनुपपत्तेः । तद्भेद इति चेत् — **नानाबीजेषु मुसलोलूखलं नैव भिद्यते** । तण्डुलभावनावयवत्वेन विधानान्न पृथक् पदार्थत्वं तेषामिति कृष्णाजिनास्तरणादिफलीकरणान्तेनानुसमयः । अतो नोलूखलादिभेदः ॥७॥

दर्शादौ '**अष्टावुपभृति गृह्णाती**'ति । प्रयाजानुयाजार्थमेकस्यामुपभृति-चतुर्गृहीतद्वयं युगपद्गृहीतम्, तथैव पशौ प्राप्तं तत्रैवानुयाजेषु 'पृषदाज्येनानुयाजान् यजती'ति द्रव्यविकारः श्रुतः । प्रयाजाज्यमविकृतमेव । तत्रानुयाजोद्देशेन पृषत्त्वं चित्रत्वं विधीयमानं तत्रासम्भवात् । तदङ्गभूताज्येष्ठवत इति तत्रोभयोरसंकराय पाठकल्प्यक्रमं बाधित्वा पदार्थभूतोपभृदेकत्वाबाधाय प्रयाजेषु कृतेषु तत्रैव पृषदाज्यं ग्राह्यमिति चेत् — **पृषदाज्ये पात्रभेदः** । पात्रैकत्वक्रमयोर्ग्रहणाङ्गत्वात् प्रापकप्रमाणस्य चोदकस्यैक्यात् बाध्यबाधकभावविनिगमनाविरहात् प्रयाजाज्यग्रहोपस्थापितस्यात्यागायोपभृदन्तरमुत्पाद्यम् ॥८॥

'अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निर्वपेदि'ति नक्षत्रेष्टिं विधायानन्तरं 'सोऽत्र प्रधानान्तरदेशे जुहोति' 'अग्नये स्वाहा, कृत्तिकाभ्यः स्वाहे'त्याद्युपहोमा विहिताः। नारिष्ठहोमाश्चातिदेशतस्तद्देशाः प्राप्ताः। तत्र प्रत्यक्षपठितोपहोमानन्तरमातिदेशिकनारिष्ठाः कार्या इति चेत् — **स्यादन्ते वैकृताहुतिः**। क्लृप्तोपकारप्राकृतातिदेशवाक्यस्य प्रधानविधिवाक्यशेषतया तदेकवाक्यतापन्नोत्पत्तिविधौ विहिताः प्राकृताः वाक्यान्तरविहितोपहोमात्पूर्वं-विहिताः प्रथममनुष्ठेयाः। अन्यतराकाङ्क्षया सन्निधिना विनियुक्ताः कल्प्योपकाराः होमाः पश्चात् ॥९॥

राजसूयेऽभिषेचनीयाख्यसोमयागविध्यनन्तरम् 'अक्षैर्दीव्यति, राजन्यं जिनाति, शौनःशेपमाख्यापयति, राजानमभिषिञ्चती'ति विदेवनादयो विहिताः। तत्राभिषेको 'माहेन्द्रस्तोत्रं प्रत्यभिषिच्यत' इत्यभिषेचनीयप्राकृताङ्गमध्येऽपकृष्टः। न प्राचोऽपकर्षति पूर्वेद्युरपकृष्यमाणा वेदिरिवाभिवासनादीन् अस्यामावास्यायामक्लृप्तक्रमत्वादिति चेत् — **देवनाद्यपकर्षः स्यादभिषेकापकर्षणे**। अक्लृप्तक्रमत्वेऽपि प्रत्यक्षपाठादत्रैव चतुर्णां क्रमोपगतः प्राकृताङ्गपश्चाद्भावस्तु विदेवनादीनामानुमानिक इति प्रत्यक्षावगतक्रमाबाधाय तदङ्गतापकर्षः ॥१०॥

अग्नौ सावित्रहोमोखासम्भरणाद्यप्राकृतपदार्थान् विधाय पश्चाद् दीक्षणीयादयः प्राकृता अप्राकृतगुणविशिष्टाः श्रुताः। तत्र क्लृप्तोपकारान् दीक्षणीयादीन् कृत्वा अक्लृप्तोपकाराः सावित्रहोमादय उपहोमवत् पश्चात् कार्याः। दीक्षणीयायाः पश्चात्पाठो गुणविध्यर्थोऽनुवाद इति न पश्चादनुष्ठानं प्रापयतीति चेत् — **पूर्वं सावित्रहोमादिदीक्षणीयेष्टितो भवेत्**। गुणार्थमपि पश्चात्-प्रत्यक्षपाठो गुणगुणिनोरपश्चादेवानुष्ठानं गमयति। प्राक्पाठस्तु चोदकात्। अतः सावित्रहोमाद्यनन्तरं दीक्षणीयादयः कार्याः ॥११॥

तत्रैव दीक्षणीयाद्यनन्तरं रुक्मप्रतिमोकाद्याम्नातं प्रत्यक्षपाठाद्दीक्षित-संस्कारादिभ्यः पूर्वं कार्यमिति चेत् — **स्याद् रुक्मप्रतिमोकादि पश्चाद्दीक्षित-संस्कृतेः**। दीक्षणीयादिभिः सह प्रकृतितः क्लृप्तक्रमका दीक्षितसंस्कारादयोऽतिदिष्टास्तदबाधाय दीक्षणीयानन्तरं तत एव कार्याः। रुक्मप्रतिमोचनादिकं त्ववश्यविधेयमिति क्वचिद्विहितं न क्रमं गमयति। सावित्रहोमादेस्तु प्राकृताङ्गपूर्वपाठात् पूर्वं क्रिया ॥१२॥

**॥ इति लघुवार्त्तिकटीकायां पञ्चमाध्यायस्य द्वितीयः पादः ॥**

---

## तृतीयः पादः

अग्नीषोमीये 'एकादशप्रयाजान् यजती'ति 'अग्नौ षडुपसद' इति प्राकृतानां प्रयाजादीनां संख्याविवृद्धिः श्रुता । तत्र प्रयाजाद्युद्देशेन विधीयमाना संख्या उद्देश्यसाहित्याविचक्षणात् प्रत्येकं भवतीति चेत्–**प्रयाजैकादशत्वादि सर्वं सम्पाद्यमिष्यते ।** एकस्य वा पञ्चानां वा दशत्वान्वयायोग्यत्वात् तत्राभिहितास्ते तथैव स्वप्रयोगं लक्षयित्वा तद्गतैकादशत्वेन स्वप्रयोगद्वारोपकृता भवन्तीति सर्वसम्पाद्या स्यात् ।।१।।

'षडुपसद' इत्यत्रैकैकं द्विरभ्यसनीयं दण्डकलितवत् । त्रिरनुवाकं पठ्यतामित्यादौ तथा दृष्टेरिति चेत् — **स्वस्वस्थानविवृद्धयैव षट्त्वाद्युपसदां भवेत् ।** तृतीयां कृत्वा पुनः प्रथमायां क्रियमाणायां प्राकृतक्रमबाधः स्यात् । अतः स्वस्वस्थाने द्विर्द्विरभ्यसनीयाः ।।२।।

एकविंशतिमनुब्रूयादिति सामिधेनीविवृद्धिः श्रुतैरागमे कर्त्तव्ये आगम्यमानर्चामन्ते वा स समिध्यमानवतीं समिद्धवन्तीं चान्तरा वा निवेशः । 'इयं वै समिध्यमानवती, असौ समिद्धवती यदन्तरा तद्धाय्या' इति धाय्यानां द्यावापृथिवीत्वेन स्तुतयोर्मध्ये आकाशत्वेन संस्तवस्तन्मध्यविधिमासां गमयतीति चेत् — **सामिधेनीष्वधाय्यानामन्त एव निवेशनम् ।** न धीयमानत्वं धाय्यात्वम्, स्तोत्राद्यर्थमागम्यमानेऽतिप्रसक्तेः । 'पृथुपाजवत्यौ धाय्ये' इत्यादिर्वैदिके ता एव तच्छब्दवाच्याः । ता एव तयोर्मध्ये [अन्त्या] अन्यास्त्वागन्तवो ते निविशन्ते ।।३।।

ज्योतिष्टोमे बहिष्पवमाने त्रयस्तृचाः स्तोत्रीयोऽनुरूपाः पयसश्च ते विवृद्धस्तोमकक्रतुषु प्राप्ताः । तत्रागमेन संख्यापूरणं वक्ष्यते ।

तत्रागम्यमानानां प्राक् पर्यासान्निवेशः । द्वादशाहे षाडहिके द्वितीयेऽहनि विवृद्धस्तोमके प्राकृतौ तृचौ पठित्वा ततश्चागन्तवो वृधन्वत्यः पठिताः ।

ततः पर्यासाः तत्सामान्यादन्यत्राप्येवमन्तवाचिपर्याससमाख्यानाच्चेति चेत्— **स्तोमवृद्धौ तथागन्तोरन्त एव निवेशनम्** । नैतादृगनुमानशास्त्रार्थनिर्णयायालम् । समाख्यापि प्रकृतावेव । अतोऽन्ते तु बादरायण इति न्यायादागन्तूनामन्त एव निवेशः । द्वादशाहविकारेष्वपि वृधन्वत्य एव तत्र । अन्ये त्वागन्तवोऽन्ते ॥४॥

विवृद्धस्तोमकक्रतौ माध्यन्दिनार्भवपवमानयोः सामागमे कर्त्तव्ये आगम्यमानानामन्त्यतृचे आगन्तुत्वान्निवेश इति चेत्—**साम्नामागम्यमानानां गायत्रादिषु वेशनम्** । त्रीणि ह वै यज्ञस्योदराणि गायत्रीबृहत्यनुष्टुप् । अत्र ह्येवावयन्त्यत एवोद्वपन्ती' त्यनारभ्याधीतेन सर्वयागार्थो न पवमानगतगायत्र्याद्यतिरिक्ते आवापोद्वापयोः परिसंख्यातत्वात्तास्वेव निवेशः ॥५॥

'अंशुं गृह्णाति' 'अदाभ्यं गृह्णाति' 'चित्रिणीरुपदधाती'त्याद्यनारभ्य श्रुतम् । ग्रहेष्टकसवनाविति शेषः । तयोस्वेन तेन यथायोगं निवर्त्तनस्य दृष्टेः । अतः प्रतिसवनं प्रतिचयनं च कार्यमिति चेत् — **औपानुवाक्यक्रत्वग्निशेषोंऽश्वादिग्रहेष्टकम्** । तैत्तिरीयतृतीयकाण्डस्यौपानुवाक्यकाण्डमिति याज्ञिकप्रसिद्धिः । तत्र विहितमौपानुवाक्यमंश्वादिग्रहेष्टकं क्रत्वग्न्यर्थंक्रतोः फलवत्त्वादग्नेश्च फलवदुपकारकत्वादिष्टकाभिरग्निमिति वाक्यादपि तदर्थत्वम् ॥६॥

चित्रिण्यादीनां पञ्चमचित्यन्ते उपधानं प्राकरणिकीनां क्लृप्तक्रमाबाधाय यां काञ्चिद् ब्राह्मणवतीमिष्टकामभिजानीयात् । तां मध्यमायां चितावुपदध्यादिति मध्यमायां प्राप्तस्यानुवादः । सर्वासां ब्राह्मणवत्त्वेन तत्रैव सर्वोपधानायोगादिति चेत् — **इष्टकमध्यमचितौ प्रत्यक्षब्राह्मणोदिताः** । अभिपूर्वजानातेः प्रत्यक्षवाचित्वात् प्रत्यक्षब्राह्मणविहिता मध्यमायाम् । लिङ्गादिकल्पितवचनविहितास्त्वन्त्यामुपधेयाः ॥७॥

मध्यमायामपि चितौ प्राकरणिकीनामनन्तरं चित्रिण्यादीनां निवेशः । अव्यवायाय 'यदेवास्योनं यच्छिद्रं तदनेन पूरयति 'लोकं पृण' 'छिद्रं पृणी' इति मन्त्रविधिः, नेष्टकाविधि. । अतश्चित्यन्तरे सावकाशं लोकं पृणायाः पूरकत्वमिति चेत् — **पूर्वं लोकंपृणायाः स्युर्मध्यमायामपि त्विमाः** । अविशेषश्रुतवचनस्य न्यायमात्रेण संकोचायोगात् । प्राल्लोकं पृणायाश्चित्रिण्यादयः ॥८॥

आधानान्तरं पवमानहवींषि 'द्वादशसु रात्रिष्वनु निर्वपेदि'त्युत्कृष्टानि। तन्मध्येऽग्निहोत्रादीन्याहवनीयस्य सिद्धत्वात् कर्त्तव्यानि। पवमानेष्टयस्तु सिद्धस्य संस्कारका इति चेत् — **अग्निहोत्रादिकर्माणि पवमानेष्ट्यनन्तरम्।** पवमानहविषां भाष्यमतेऽन्यर्थत्वात् वार्त्तिकमते आधानाङ्गत्वात्तत्पूर्वमग्न्यनिष्पन्ने इष्ट्यनन्तरमग्निहोत्रादीन्युभयजन्यसंस्कारसमुदायस्याहवनीयशब्दार्थत्वात् ॥९॥

तस्माद् 'अग्निचिद्वर्षति न धावेत्' इत्याद्यग्निचिद्व्रतानि चयननिर्वृत्तौ निमित्तसम्पत्तेराहिताग्निव्रतवत् क्रतोः पूर्वं भवन्तीति चेत् — **अग्निव्रतानि क्रत्वन्ते।** अग्निकर्मिका चयनकरणिका भावनानिमित्तं क्रतूपकारविशिष्टत्वेन चाग्नेर्भाव्यता। उपकारश्च क्रत्वर्थाहवनीयाधारत्वम्। स च क्रतुना नानिवृत्तः। तदनिवृत्तौ फलापवर्गिणी भावनापि न निवृत्तेति क्रत्वन्त एव व्रतानि। दृष्टान्ते त्वग्निसंस्कारस्य निमित्तत्वाद्युक्तम्। तदनन्तरं प्रवर्त्तनं व्रतस्य ॥१०॥

'आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाण' इति तथा 'दण्डेन दीक्षयती'त्यादि च श्रुतम्। सर्वं चादृष्टार्थं समुच्चितं सत् दीक्षितत्वोपपादकमिति सर्वान्ते 'दीक्षितो न जुहोती'त्यादीनि व्रतानीति चेत् — **इष्टयन्ते दीक्षितव्रतम्।** क्रियार्थक्रियोपपदे लृङ्विधानात् यमनियमादिव्रतार्थक्रिया इष्टिरेव। व्यापारात्मकदण्डादयस्तु तत्तत्संस्कारव्यञ्जकाः। तद्व्यञ्जनप्रयोजनं भृतिवचने दातुः प्रवृत्तिः। अत इष्टयन्ते द्व्यहं नाश्नातीत्यादि व्रतानि ॥११॥

काम्यनैमित्तिकेष्टयः सौर्याद्याः क्रमपठिताः प्रयाजादि च क्रमेण कर्त्तव्या इति चेत् — **काम्यनैमित्तिकेष्टीनां न पाठक्रमतः क्रमः।** एकप्रयोगवचनपरिगृहीतानां क्रमापेक्षिणां पाठः क्रमनियमाय भवेत्। न चेह भिन्नफलानां भिन्ननिमित्तानां च तथात्वमित्यनियमः ॥१२॥

क्वचित्प्रयोगवचनभेदेऽपि वाचनिकः क्रमो भवति। 'एष वा व प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः। तस्मादेतेनानिष्ट्वा अथान्येन यजेते'ति। तत्र चतुःसंस्थो ज्योतिष्टोम एतच्छब्दार्थः। 'यज्ज्योतिष्टोम' इत्यस्याविशेषादिति चेत् — **अग्निष्टोमस्य निर्देशो य एतेनेत्यसौ मतः।** अग्निष्टोमस्य नित्यत्वादन्यासां काम्यत्वेन विकृततया प्रकरणशून्यत्वात्। एतेनेति यागस्य करण-

त्वप्रतीत्या तत्र संस्थानामेव कारणत्वेन यागस्याश्रयतया करणत्वायोगाच्चाग्नि-ष्टोमसंस्थस्यैवैतच्छन्दपरामर्शः ॥१३॥

अथान्येनेति संस्थानामेव ग्रहणम् । तत्रैवाश्रयत्वेन यागानुवृत्तेः सन्निधानादिति चेत् — **संस्थान्तरगवादीनामथान्येनेत्ययं समः । अग्निष्टोमसंस्थाकान्यसोमयागमात्रपरान्यशब्दस्वारस्यात् । तदन्यमात्राणां संस्थान्तरैकाहाहीनसत्राणामग्निष्टोमोत्तरकालता अत्रोच्यते ॥१४॥**

**अन्यशब्दो न सर्वस्याग्राहकः, सर्वग्रहप्रसक्तौ वाक्यशेषेण 'यो वै त्रिवृदन्यं यज्ञक्रतुमापद्यते स तं दीपती'त्यादिना एकस्तोमानां त्रिवृदग्निष्टोमः, पञ्चदश उक्थ्यः, सप्तदश उक्थ्यः, एकविंशः षोडशीत्यादीनां निर्देशादिति चेत् — न चायमेकस्तोमानां निर्देशः सर्वशो यतः । त्रिवृदादिसम्बन्धमात्रेण वाक्यशेषोपपत्तेर्नाविशेषप्रवृत्तान्यश्रुतिसंकोच इति ॥१५॥**

**॥ इति लघुवार्त्तिकटीकायां पञ्चमाध्यायस्य तृतीयः पादः ॥**

---

## चतुर्थः पादः

'ऐन्द्रवायवं मैत्रावरुणमाश्विनमि'ति पठित्वा 'आश्विनो दशमो गृह्यते' इति श्रुतम्। 'अग्निहोत्रं जुहोति' 'यवागूं पचतीति' च। तत्र श्रुत्यर्थपाठानामविशिष्टत्वात् पूर्वं वा पश्चाद्वा विकल्पेनानुष्ठेयमिति चेत् — **पाठश्रुतेऽर्थतश्च दुर्बलः क्रमसाधने।** श्रुतिविहिते पाठात्तत्कल्पनायोगात्। द्रव्यप्रयोजनविरोधे च पाठानादरणात् दशमस्थान एवाश्विनग्रहः। पक्त्वैव तया होमः ॥१॥

दर्शादौ शाखाच्छेदादयः सान्नाय्यधर्माः प्रथमं प्रवर्तन्ते प्रदानं त्वाग्नेयस्य पूर्वं पश्चात् सान्नाय्यस्य। तत्र स्विष्टकृदवदानादिकं प्रवृत्तिमुख्यक्रमयोरनुरोधादनियतमेव कार्यमिति चेत् — **प्रवृत्तिक्रमतो मुख्यक्रमस्तु बलवान् भवेत्।** मुख्यक्रमादरे वचनात् पूर्वेद्युः क्रियमाणानां केषाञ्चिदेव स्वप्रधानात् विप्रकर्षो, नान्येषाम्। प्रवृत्तिक्रमे तु सर्वस्य विप्रकर्ष इति स दुर्बलः ॥२॥

'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेते'तीष्टिपूर्वकत्वं सोमे श्रुतम्। सोमपूर्वकत्वमिष्टौ तु न श्रुतमिति न तथानुष्ठानमिति चेत् — **आधानस्येष्टिपूर्वत्वं सोमपूर्वत्वमप्युभौ।** आधानाव्यवहितोत्तरत्वं 'सोमेन यक्ष्यमाणोऽग्नीनादधीते'ति वचनात्सोमे श्रुतम्। आनन्तर्यमात्रं सोमस्य नित्यतया विनाप्यस्माद्वचनात् सिद्धयतीति वचनार्थवत्त्वायाव्यवहितत्वमर्थः। तदिष्टिपूर्वकत्वे सोमस्य न घटत इत्यर्थात् सोमानन्तर्यमिष्टेः, न तु वाचनिकमित्याधानस्य सोमादिष्टेश्चाव्यवहितं पूर्वमनुष्ठानम्। अत्र क्रियार्थकक्रियोपपदविहितलृट्श्रवणात्सोमाङ्गत्वमाधानस्येति तदवाक्यम्। अग्निद्वारा तस्य तदुपकारकत्वमात्रेण लक्षणया लृडुपपत्तेः 'दर्शपूर्णमासाभ्यामिष्ट्वे'त्यत्र प्रयोगभेदे तन्निरूपितकर्त्रैक्याभावादाश्रयैक्यलक्षकक्त्वाप्रत्ययवत् ॥३॥

'आग्नेयो वै ब्राह्मणो देवतया'। 'स सोमेनेष्ट्वाग्नीषोमीयो भवति। यदेवादः पौर्णमासं हविस्तत्तर्ह्यनु निर्वपेत्, तर्हि स उभयदेवतो भवती'ति वचनेन

पौर्णमासीमात्रोत्कर्षप्रतीतावपि केवलामावास्याप्रयोगात् सोमयाजिनः फलानुदयात् पौर्णमास्युपक्रमत्वाच्चेष्ट्योः कृत्स्नोत्कर्षपर्यवसानात् विप्रस्य सोमपूर्वत्वमेवाधानस्य । अन्ययोस्तु कल्पद्वयम् । न च तन्नामकं तद्धर्मकं वा कर्मान्तरं विधीयत इति युक्तम् । नाम्नो नानार्थत्वधर्मलक्षणार्थत्वयोः विशिष्टविधिगौरवस्य चायुक्तत्वात् ।

यद्वा 'पौर्णमासं हविरि'त्येकदेशश्रुत्या तावन्मात्रोत्कर्षः । न चान्यस्य निष्फलत्वम् । असोमयाजिनो वचनबलात्तदुपक्रमत्वस्य तावन्मात्रात् फलस्य च कल्पनादिति चेत्—**ब्राह्मणस्याप्युभौ कल्पौ हविरेकं हि कृष्यते** । न कृत्स्नपौर्णमास्युत्कर्षः । 'अदो हविरि'त्यग्नीषोमीयमात्रोत्कर्षश्रुतेः । तन्मात्रविधुरदर्शपूर्णमासयोर्विप्रस्याप्यधिकार इत्यन्ययोरिव द्वावेव कल्पौ ॥४॥

'सोमेन यक्ष्यमाणोऽग्नीनादधीत, नर्त्तून् सूर्क्षेत् न च नक्षत्रमित्यत्र श्रुत ऋतुनक्षत्रातिक्रम आधानस्य तत्प्रकरणादिति चेत् — **क्त्वाद्यनादरवचः सोमार्थं परिगृह्यते** । तस्यामेव शाखायां 'यदहरेवैनं यज्ञ उपनमेदथादधीते' त्यादिना आधानकालानादरस्योक्तत्वात्सोमकालबाधायायम् ॥५॥

'अग्नीषोमीयपुरोडाशवदुपांशुयाजस्यापि तद्दैवत्यत्वादुत्कर्ष इति चेत् — **ब्राह्मणस्य पुरोडाशमात्रमुत्कर्षमिच्छति** । अग्नीषोमीयानर्होऽप्ययं विष्णुं प्रजापतिं वोपादायोपांशुयाजं करिष्यतीत्यनुकर्षः ॥६॥

सौर्यादिविकृतयः चतुर्दश्यामुपक्रम्य पर्वणि समाप्यत इति प्रकृतिवद् द्व्यहकालाः 'यष्टव्ये'ति वचनं पौर्णमास्यां पौर्णमास्ये'त्यादिवदेकदेशपरम् । न च तत्र पूर्वेद्युस्त्वाहितो भवति । 'उत्तरमहर्यजती'तिवचनमस्तीति वाच्यम् । तस्येहाप्यतिदेशादिति चेत् — **सद्यो विकृतयः** । तृतीयाश्रुत्या तत्करणकभावनायां श्रुतकालस्य नातिदेशात्सङ्कोच इति पौर्णमासीविकारा अमावास्याविकाराश्च प्राकृतकालव्यवस्थानादरेण पौर्णमास्याममावास्यायां वा कृत्स्नाः प्रयोक्तव्याः ॥७॥

'नासोमयाजी सन्नयेत्' 'आग्नेयो वै ब्राह्मण' इत्याभ्यां सान्नाय्याग्नीषोमीययोः सोमोत्तरकालत्वश्रुते स्तद्विकृतीनामप्यातिदेशिककालानुरोधात् सोमो-

त्तरकालत्वमित्याह — **सोमादूर्ध्वं सान्नाय्यविक्रया:** । उपलक्षणं चैतत् । अग्नीषोमीयविक्रया इत्यादि द्रष्टव्यम् । वचनतौल्यात् ॥८॥

प्रकृतिवत्सोमविकाराणामपि प्रागिष्टेरूर्ध्वं च सम्भव इति चेत् — **तथा सोमविकारणामूर्ध्वमिष्टयोरनुष्ठितिः** । सोमस्येष्टेः प्रागनुष्ठानं न वाचनिकम्, किन्त्वाधानाव्यवहितोत्तरत्ववचनादार्थिकम् । न चार्थिकं चोदकः प्रतिदिशेत् । किञ्च 'एष वा व प्रथम' इति वचनादग्निष्टोमोत्तरकालत्वं विकृतीनाम् । न चैतादृशमाधानानन्तर्यम् । आधानोत्तरकालश्चैकः प्रत्यक्षवचनात्प्रकृत्य वरुद्धो न विकृतेः सम्भवतीति इष्टयानन्तर्यमेव प्राकृतं विकृतिष्वतिदिश्यत इति सोमविकाराः सर्वे इष्टयनन्तरं सोमं कृत्वा पश्चात्कार्या इति ।

अत्र केचित् आश्वलायनेन 'प्रागपि सोमेनैके' इति सूत्रणात् इष्टेः पूर्वकालः सोमाङ्गम्, इष्टेः प्रागपि सोमेनेत्येक आचार्या इति सूत्रार्थः । तथा च सोमविकारेष्वपि इष्टिपूर्वकालस्यातिदेशादाधानाव्यवधानेनाग्निष्टोमं कृत्वा अकृत्वैव इष्टयारम्भं सोमविकारा भवन्तीत्यावक्ष्यते । यत्र विरोधाधिकं वार्त्तिकोक्त्या[1]येनाननुष्ठानलक्षणमप्रामाण्यं स्यादिति द्रष्टव्यम् ॥९॥

॥ इति लघुवार्त्तिकटीकायां पञ्चमाध्यायस्य चतुर्थः पादः ॥

॥ समाप्तश्चाध्यायः ॥

# अथ षष्ठोऽध्यायः

## प्रथमः पादः

'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' [पशुकाम] इत्यादौ धात्वर्थ एव पदश्रुत्या प्रत्ययोपात्तभावनाभाव्यः, न स्वर्गः, भिन्नपदोपात्तत्वात् । स च चन्दनाद्यात्मकः सिद्धः, साध्ययागभावनायां करणम् । स्वर्गकामना वा समुद्रमनोध्यानवत् यागाङ्गमिति चेत् — **सम्बध्यन्ते फलत्वेन स्वर्गाद्याः कामनान्विताः** । पदश्रुत्यपेक्षया समानप्रत्ययश्रुतिबलीयस्त्वात्तया विधियुक्ता भावना गम्यमाना नापुरुषार्थं भाव्यं स्वीकरोतीति भिन्नपदोपात्तोऽपि प्रीतिरूपस्वर्गो भाव्यत्वेन सम्बध्यते । काम्यमानत्वादपि फले एव कामनास्वारस्यात् । तथा च फलवत्त्वात् कर्मणां तत्स्वामित्वरूपाधिकारिलाभादधिकारलक्षणमारब्धव्यम् ।।१।।

स्वर्गकामवाक्येन तत्कामनावतां सर्वेषामधिकारप्रतीतेस्तस्य प्रधानवाक्यतया बलवतोऽङ्गवाक्यैः सङ्कोचायोगात् । तदनुरोधेनान्धादेराज्यावेक्षणादिरहितमेव फलाय भवति । तिरश्चामपि चतुर्दश्युपवासादेः सारमेयादिषु प्रसिद्धेरधिकार इति चेत् — **मूकदेवतिरश्चां तु नास्ति कर्मस्वधिक्रिया** । अङ्गानि न पुरुषं प्रति विधीयन्ते, अङ्गत्वविरोधात्; किन्तु क्रतुं प्रति । प्रधानवाक्यैकवाक्यत्वादरः वाक्यानां, ततः तावदङ्गोपसंहारसमर्थं प्रत्येव तद्विधेर्नोऽन्धादेः क्रतुविधिरिति न तेषामधिकारः । तिरश्चां द्रव्याद्यभावान्न प्रधानेऽपि सामर्थ्यं, देवानां तु यजनीयदेवतान्तराभावात्, अग्न्यभावाद्विग्रहाभावाच्चानधिकारः ।।२।।

'स्वर्गकाम' इत्यत्र लिङ्गस्य प्रातिपदिकार्थतया ग्रहत्ववद् विवक्षितत्वादविवक्षितलिङ्गस्य पुंस एवाधिकारः ।

भार्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः ।

इति वचनाद् द्रव्यत्वादप्यनधिकारस्त्रिया इति चेत् — **स्त्रीपुंसयोरधिकृतिः** । प्रकृत्यर्थोऽपि लिङ्गमुद्देश्यविशेषणत्वाद् ग्रहैकत्ववदविवक्षितम् । न च प्रकृत्यत्वं विभक्तिविकाराणां टाबादोनां चान्वयव्यतिरेकाभ्यां तद्बोधकत्वात् । अतः स्त्रिया अप्यधिकारः । कर्त्तनादिना अर्जनसम्भवात् । पुत्राभावे [?]रहितेत्यादिवचनात् 'धर्मे चार्थे च नातिचरितव्या' । पाणिग्रहात्तु सहत्वं कर्मसु' द्रव्यपरिग्रहेषु चेत्यादिभ्यश्च नाद्रव्यत्वम्, 'ये यज्ञपत्नी'मिति लिङ्गाच्च । भार्या पुत्रश्चेत्यादि त्वस्वातन्त्र्यपरम् ।।३।।

आख्यातोपात्तसंख्याया उपादेयकर्तृविशेषणतया विवक्षितत्वात् स्त्री पुंसयोः पृथक् प्रयोग इति चेत् — **सहैव स्यात्तयोस्तु सा** । विभागनिषेधेन संसृष्टद्रव्यत्वादितरेतरप्रयोगे इतरेतरकर्त्तृकाज्यावेक्षणान्वारम्भणादिलोपापत्तेः । पत्नीयजमानशब्दयोः स्वामिवाचितया ऋत्विग्वदन्यतरस्यापि परिक्रमासम्पाद्यत्वात् । कर्त्तृत्वस्य दम्पत्योर्व्यासक्तत्वेनाग्नीषौमौ देवते इति वत् सह प्रयागोपपत्तेश्च सहैवाधिकृतिस्तयोः ।।४।।

आधानं प्रकृत्य 'क्षौमवसनावग्निमादधीयातामि'ति श्रुतम् । तत्रादधीयातामिति कर्त्तृकारकद्वयश्रवणेन पूर्वाधिकरणवत् दम्पत्योः कर्तृकारकशक्तेर्व्यासक्तत्वात् । द्वौ पुमांसौ सस्त्रीकौ गम्येते । उत्पत्तिवाक्यत्वाधानमात्रविधिपरं नोपादेयकर्त्तृविशेषणतया कर्त्रैकत्वमपि विदधाति । विधिगौरवप्रसङ्गात् । तथा चोत्पत्तावप्राप्तं कारकद्वयं समानप्रत्ययश्रुत्युपात्तधात्वर्थे विधीयते । क्षौमवसनसम्बन्धविधावत्यन्तं वाक्यं स्यात् । न च क्षौमस्यापि विधानाद्वाक्यभेदः । शब्द इत्यवयवयोगान्मालिन्यवत्तया[?] गौरवापातस्यानुवादत्वात् । तस्मात्कारकद्वयविधिरिति चेत् — **क्षौमे वसानौ स्त्रीपुंसौ** । उत्पत्तिवाक्ये एकत्वाविवक्षावतरणाभावादुत्पत्तिशिष्टतद्विरोधे तद्द्वित्वविधिः । क्षौमशब्दश्च रूढया जातिविशेषवाची । सन्निधिवशात्परित्य[?]कार्यः स्यात् । क्षौमवसनशब्दानर्थक्यम् । तद्द्विवचनं त्वग्नीषोमौ देवते इति···धिष्ठानद्वित्व[?]रम् । तस्मादर्थप्राप्तवसने क्षौमसम्बन्धो विधीयत इत्येक इव पुमान् सस्त्रीक आधानं कुर्यात् ।।५।।

दम्पत्योः सह प्रयोगे स्थिते 'पत्न्यवेक्षत' इत्यादिविहतं तयैव कार्यम् ।

यत्र मानो···रभत इत्यादि तु उपात्ते यजमानस्य विवक्षितलिङ्गत्वम् [त्वात् ?]। तेनैव फलिसंस्कारास्तु द्वयोः फलित्वादावर्त्तते। यानि तु परार्थान्युपस्थानानुमन्त्रणादीनि याजमानसमाख्यातानि तत्कर्त्तृकाणि तान्यन्यतरेण कार्याणि। आबन्ताद्वा पुंल्लिङ्गाद्वा तद्धितोत्पत्तेः कल्पत्वादिति चेत् — **यावदुक्तादिकं स्त्रियः।** आदिपदात् फलिसंस्कारग्रहः। स्त्रीणामाहृत्याध्ययननिषेधाद् विदुषी सम्पन्नविद्यपुरुषसत्त्वेन विदुषी कार्या। तस्मात्पुमानेव कुर्यात् ॥६॥

'स्वर्गकामो यजेते'त्यादिरविशेषेण चातुर्वर्ण्यमधिकरोति स्वाध्यायोऽध्ययनं क्रत्वङ्गार्थज्ञानजनकं सत् क्रत्वङ्गं प्रयाजादिवत् क्रतुविधौ नैव प्रयुज्यते। चतुर्थस्योपनयनविध्यभावात्ते विनैवाधीत्य विद्या लब्धा कर्मण्यधिक्रियते। अन्ये त्रयस्तूपनयनपूर्वकमधीत्याधिक्रियन्ते। यद्यपि च श्रुत्याद्यभावान्नाध्ययनं क्रत्वङ्गम्, किन्त्वाधानमिवाग्न्यर्थं विद्यार्थं तथापि भृतकादिनाधीत्य विद्वान् चतुर्थोऽधिक्रियते। अध्ययनस्य क्रत्वनङ्गतया अवैगुण्यादिति चेत् — **त्रयाणामेव वर्णानां भवेद् यागेष्वधिक्रिया।** अध्ययनस्यानङ्गत्वेऽपि त···र्थज्ञानस्य क्रत्वर्थत्वादन्यतो लब्धविद्यास्त्रैवर्णिकानेव प्राप्य चरितार्थः। क्रतुविधिर्न शूद्रस्य तामाक्षिपति। अनग्नित्वाच्चानधिकारः विध्यधीनग्रहणमन्त्राभावाच्च। तस्माच्छूद्रो यज्ञे नावक्लृप्त इति प्रतिषेधाच्चानधिकारी चतुर्थः ॥७॥

सिद्धविद्यत्रैवर्णिकाधिकारिवत् सिद्धद्रव्याधिकारकं शास्त्रं नाद्रव्यस्य तदाक्षिपेदिति चेत् — **अधिकारी भवेद् द्रव्यहीनस्तत्समुपार्जनात्।** प्रत्यक्षविधिवच्च विद्या इवात्र तादृशामभावात् पुरुषार्थभोजनादिवत्। क्रतुरपि तदाक्षिपेदित्यधनं तदर्जनं कुर्यात्, ततोऽधिकुर्यात् ॥८॥

अन्तरङ्गाङ्गहीनस्य नाधिकार इत्याशङ्क्य प्रतिसमाधेयत्वे तदाक्षिप्याधिकुर्यादित्याह — **अङ्गहीनोऽपि तस्यैव समाधानेऽधिकारवान्** ॥९॥

तस्यापवादमाह — **यस्याः प्रतिसमाधेयं तन्न तस्यास्त्यधिक्रिया।** तदङ्गहीनमप्रतिसमाधेयं चेन्न। काम्येष्वधिक्रियते। कृताधानो नित्येष्वधिक्रियते ॥१०॥

दर्शपूर्णमासयोः आरार्षेयं वृणीत' इत्युक्त्वोच्यते 'एकं वृणीते''द्वौ

वृणीते' त्रीन् वृणीते, 'न चतुरो वृणीते', 'न पञ्चातिवृणीते' इति। तत्र आद्येन-वरणविधिः, न चतुरो, न पञ्चातीति निषेधः। तथा चैकद्वित्रिपञ्चार्षेयाणां प्राप्तानामनुवादः। सामान्यस्यैकद्वित्रिपञ्चभिरुपसंहाराद्वा चतुर्णामप्यधिकार इति चेत् — **स्याद्वा न मन्त्रार्षेयस्य**। आद्ये प्रतिषेधद्वयाश्रयणं त्रित्वस्य पाक्षिकत्वं च स्यात्। द्वितीये विधित्रयं निषेध स···याथवा कल्प्या न पञ्चातीत्यनुवादसामर्थ्यात् पञ्चानामपि वरणविधिः कल्प्यः। त्रित्वस्य पाक्षिकत्वं च त्रित्वविशिष्टवरणविधौ सर्वस्यैवानुवाद इति तादृक्वर्णोपसंहारमर्थानामेवाधिकार इति नैकद्व्यार्षेययोरधिकारः। [?] मनुवत्पक्षे तु सर्वेषामेवाधिकारः ॥११॥

'वसन्ते ब्राह्मणोऽग्नीनादधीते'त्यादि विधाय 'वर्षासु रथकार आदधीते'ति श्रुतम्। तत्र लब्धविद्यानां त्रयाणामेव रथकरणनिमित्ते वर्षाविधिः, न सङ्करस्य विशिष्टाधानविधिर्गौरवादविद्वत्त्वाच्चेति चेत्—**रथकारो न यौगिकः**। रुढिप्राबल्यादविदुषोऽपि विशिष्टाधानविधिप्रतीते 'ऋभूणां त्वा देवानाम्' इत्यादिमन्त्रवर्णाच्च ऋभुसौधन्वनपर्यायरथकारस्यैवाधिकारः ॥१२॥

'रौद्रं वास्तुमयं चरुं निर्वपेत्'। 'एतया निषादस्थपतिं याजयेदि'ति श्रुतम्। तत्र षष्ठीसमासाश्रयणेन सिद्धाग्निविद्यत्रैवर्णिकाधिकारेष्टिरिति चेत् — **निषाद एव स्थपतिश्चरौ रौद्रेऽधिकारवान्**। षष्ठीतत्पुरुषे निषादपदे निषादनिरूपितसम्बन्धवति लक्षणापत्त्या कर्मधारय एव श्रुत्यर्थलाभात्। तद्बलाच्चानग्नेरविद्यस्य च जातिविशेषस्याधिकारः ॥१३॥

**॥ इति लघुवार्त्तिकटीकायां षष्ठाध्यायस्य प्रथमः पादः ॥**

## द्वितीयः पादः

अनेककर्त्तृकेषु 'ऋद्धिकामाः सत्रमासीरन्नि'त्यादिष्वाख्यातोपात्तकर्त्तृ-बहुत्वस्य विवक्षितत्वात्संहतानां कर्त्तृत्वप्रतीतेरेकेन च कृते अपरस्य तद॰योगात्। बहूनां प्रत्येकं कर्त्तृत्वानुपपत्तेः परिषदः कर्त्तृत्वम्। तस्या एव च भोक्तृत्वमिति फलावयवकामिनामधिकार इति चेत् — **सत्राधिकारिणां कृत्स्नमेकैकस्य फलं भवेत्**। उद्देश्यफलकामसाहित्यविवक्षणात् संहत्य प्रयोक्तृणां प्रत्येकफलमिति शास्त्रादभ्युपगमेऽप्यत्यन्ताकर्त्तृगामित्वाभावादाख्याते बहुवचनश्रुत्या कारकरूपबहुत्वप्रतीतेश्च। शिबिकोद्वहनादिष्विव सर्वकर्त्तृणां युगपदेव पदार्थेष्वन्वयादेकेन कृत इत्यस्याभावादन्यथाधिष्ठानबहुत्वलक्षणापत्तेः। प्रत्येकमेव कर्त्तृणां प्रत्येकं कृत्स्नं फलमिति कृत्स्नफलकामिनामेवाधिकारः ॥१॥

'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'त्यादावुद्देश्यगतैकत्वस्य लिङ्गवदविवक्षितत्वादेको द्वौ बहवो वा यजेरन्। न चाख्यातार्थभावनाक्षिप्तोपादेयकर्त्तृविशेषणसंख्याविवक्षितेति युक्तम्। यागेन स्वर्गमाप्नुयादिति यजेतेत्यस्यार्थः। तत्स्वर्गं कुर्यादिति। अन्यकृतस्यान्येनापि प्रार्थ्यमानात्। तथापि वा फलक्रियाया रागप्राप्तेः करणोपरागमात्रस्यैव तत्र विधाने भावनां यागं वा प्रति प्रत्ययार्थसंख्याया वैरूप्यापत्त्या विध्यनुपपत्तेः। यागानुरक्तत्वेनाप्राप्तत्वेऽपि तस्याः दध्यनुरक्तत्वेन होमस्येव च प्राप्ताप्राप्तविवेकेन करणमात्रे विधिपर्यवसानादिति चेत् — **एकोऽधिकारी दर्शादौ**। न तावत्स्वर्गप्राप्तिः प्रत्ययार्थः, किन्तु स्वर्गं कुर्यादिति क्रियैव आत्मनेपदविधिभ्यां परप्राप्तिवारणात्। सा च यच्छब्दाद्यनुपहतविधिशक्तिकेन प्रत्ययेनानेकविशेषणविशिष्टा विधीयत इति तद्विशेषणसंख्याविधेयविशेषणत्वाद विवक्षिता। फलं हि कामयमानस्तदुपायापरिज्ञानात् प्रवृत्त्यप्रवृत्त्योरुदासीनो विशिष्टक्रियां फलाय विधीयमानां

शास्त्रप्रामाण्यादवगत्य प्रवर्त्तते। फलक्रियाप्राप्तौ विशिष्टविधिवाक्येषु विशेषणपरत्वाद् विधेः प्रतिविधेयं विध्यावृत्तिः स्यादिति अप्रासङ्क्रियैव विशिष्टा विधेया। प्राप्तायामपि तस्यां सैव विशिष्टा विधीयत इत्युक्तमाधाराग्निहोत्राधिकरणे किमुताप्राप्तायाम्। तस्मादुपादेयकर्त्रैकत्वस्य विवक्षितत्वादेक एवाधिकारी ॥२॥

सौर्यादिकाम्यकर्मफलप्राप्तौ तदिच्छानिवृत्तौ वा आरम्भमपि न समापयेत्, वैयर्थ्यात्। न च शिष्टविगर्हणवारणाय समानम्। तस्य भ्रान्तिमूलत्वादिति चेत् — **समाप्यारम्भयुक् क्रिया**। शिष्टाचारप्रामाण्यस्य स्थितत्वात् तैत्तिरीये 'देवताभ्यो वा एष आवृश्चते, यो यक्ष्ये' इत्युक्त्वा 'न यजते' त्रैधातवीयेन यजेत' तदेव ताभ्य आवृश्चत इति प्रायश्चित्तश्रवणात्, अतः समापनीयमारब्धम् ॥३॥

गृहरथादिदृष्टार्थमपि काम्यं देवताश्रयव्यापारत्वादवश्यसमापनीयमिति चेत्—**गेहादि न समाप्यं स्यात् फलेच्छापगमे सति**। गृहसिद्ध्युत्तरकालं गृहादौदेवतास्थापनस्य पुरुषार्थत्वान्न तत्कर्म देवतासम्बन्धीति न समाप्यम् ॥४॥

'न कलञ्जं भक्षयेदि'त्यादौ नञाख्यातयोः सम्बन्धेन न प्रतिषेधः व्यवहितान्वयापत्तेः। किन्तु नञधात्वर्थयोः सम्बन्धेन विधियोग्यविरोधिसंकल्पलक्षणा। स च स्वर्गाय प्रत्ययेन विधीयते। तथा चाव्यवहितान्वयो धात्वर्थविधानं च। एवञ्च फलार्थिना वर्जनीयम्। अन्यस्य याथाकाम्यमिति चेत् — **भक्षणं लशुनादीनां फलाय न निषिध्यते**। विना कारणं सन्निधिलोभेन पदद्वयश्रुतित्यागायोगात् परिपूर्णस्याख्यातस्य नञन्वये व्यवधानशङ्कायोगाच्च। नञसमभिव्याहृततिङा प्रेरणाविरोधिनिवर्त्तना निवृत्तिफला प्रतिपाद्यमाना निवृत्तिविषयस्य बलवदनिष्टजनकत्वेन विनानुपपन्ना धात्वर्थस्य तत्साधनतां कल्पयतीति सर्वेषां नित्यमेव वर्ज्यमेवंजातीयकम् ॥५॥

स्मार्त्ताः नियमाः 'गुरुरनुगन्तव्यः' प्राङ्मुखो भुञ्जीयात्, उदङ्मुखो मूत्रं कुर्याद्'······अनग्निविद्यासाध्यत्वाज्जाता [?] यदा शक्नुयात्तदारम्भाः स्युरिति चेत् — **आरभ्यैवोपनयनादभिवादादयः स्मृताः**। उपनयनादिर्नियम इति स्मृतेस्तदारम्भाः स्युः ॥६॥

'यावज्जीवमग्निहोत्रं जुहोति' 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेते' त्यादौ निमित्ते नैमित्तिकस्य प्रत्यवायपरिहारायावश्यकर्त्तव्यत्वादङ्गभू[त]सायं कालादिपरित्यागेन सातत्येन कुर्यादिति चेत्– अग्निहोत्रादिकं कार्यं प्रदोषादिषु जीवता । उपादेये प्रयोगविध्यनुष्ठाप्यो कालविद्याग्न्याद्यतिरिक्ते यथाशक्त्युपबन्धः । अत्र तु प्राप्ते काले विदुषाग्निमत्ता च यावज्जीवं कुर्यादिति विधानादङ्गस्यापि कालस्यार्थान्निमित्तविशेषणत्वमिति तत्कालजीवी कुर्यात् ॥७॥

कालशास्त्रान्निमित्तसङ्कोचे एकस्मिन् सायं प्रातश्च एकस्मिन् दर्शे पौर्णमास्यां चानुष्ठानात्तच्छास्त्रचरितार्थ्यान्नावर्त्यानीति चेत् — तच्च प्रतिप्रदोषादिकालमावर्त्तते सदा । कालशास्त्रादन्यकालीनजीवनस्य निमित्तत्वाभावेऽपि तत्कालीनजीवनावृत्तौ तदावृत्तेरवर्जनीयत्वात्पुनः पुनः कार्याणि ॥८॥

प्रत्यावृत्तिभिन्नफलजनकानां निमित्तावृत्त्या आवृत्तावपि कर्माङ्गभेदवादिनिमित्तहोमादौ सकृत् शतेनापि क्रतूपकारसिद्धेर्न भेदेनावृत्तावावृत्तिगुणकहोमयुक्त एव क्रतुः सगुण इत्यवगतेस्तदावृत्तावावृत्तिस्त्वन्तहोमादीनाम् ॥९॥

**['आवर्त्तते निमित्तेषु स्कन्नहोमादिकं तथा ।]**

गुर्वनुगमनादीनामाचारप्रमाणकानां न गमनावृत्तावावृत्तिनियमः दृष्टार्थत्वेन गुरुप्रीत्यनुसारित्वादिति चेत् — अभिवादाद्यपि तथैवावर्त्तेत निमित्ततः । दृष्टार्थत्वेऽपि शास्त्रान्नियमादृष्टाभ्युपगमात्तद्वशेन निमित्तावृत्तावावृत्तिः ॥१०॥

'सोमेन यजेत' 'स्वाध्यायमधीयीत' 'प्रजामुत्पादयेदि'ति श्रुतम् । सोमविद्याप्रजं न नित्यम्, ज्योतिष्टोमवाक्येन सोमयागस्य फले विधानात्, वसन्तवाक्यस्य कालविधिपरत्वाद् विद्याप्रजयोर्विश्वजिद्वत्स्वर्गफलत्वात्सप्तमे ब्रह्मवर्चसकाम इत्यध्ययनाङ्गोपनयनफलानामध्ययनोपसंहाराच्चेति चेत् —सोमविद्याप्रजं नित्यम् । 'वसन्ते वसन्ते' इति वीप्सया वसन्तस्य निमित्तत्वावगमान्निमित्तावृत्तावावृत्तिर्ज्योतिष्टोमस्य । अङ्गत्वबोधकत्वानभ्यस्तं 'वसन्ते ज्योतिषा यजेते'ति कस्यांचिच्छाखायां प्रकरणे श्रूयते । अध्ययनमप्यक्षरग्रहणद्वारा अनुष्ठानोपयोग्यर्थज्ञानार्थमावश्यकम् । 'सप्तम' इति त्वध्ययनाङ्गो-

पनयनाश्रितसप्तवर्षगुणफलम् । अनुत्पाद्यतयात्मजानिति निन्दाश्रवणात्प्रजोत्पादनमपि नित्यं 'जायमानो ह वै' इत्यर्थवादवाक्यादपि त्रितयमपि नित्यम् । ननु तद्वाक्ये ब्राह्मणग्रहणात् तं प्रत्येवावश्यकत्वं गम्यते । नान्यौ प्रतीत्यत आह — **तत्त्रयाणामपीति च** । तत्सोमविद्याप्रजं विधौ विशेषाश्रवणार्थवादगतब्राह्मणग्रहणमुपलक्षणम् ॥११॥

॥ इति लघुवार्त्तिकटीकायां षष्ठाध्यायस्य द्वितीयः पादः ॥

---

## तृतीयः पादः

यावज्जीवादिनैमित्तिकविधिविहितेषु सर्वाङ्गोपसंहारसमर्थ एवाधिक्रियते। अङ्गानां समुच्चित्य कथंभावेन सङ्ग्रहस्यैकादशे वक्ष्यमाणत्वात्। अन्यथा अफलत्वापातात्। अतो हीनाङ्गो नाधिक्रियत इति चेत् — **नित्यं कार्यं यथाशक्ति।** यावच्छब्दसम्बद्धजीवनं धातुसम्बन्धविहितणमुल्प्रत्ययेन सम्बन्धान्तराभावात्। यागानुरक्तभावनां प्रति निमित्तत्वेन गम्यते। दर्शपौर्णमासशब्दविशेषितश्च यजिः कालयोगिनामाग्नेयादीनामेव वाचको नाङ्गानामिति चतुर्थोपान्त्ये स्थितम्; निमित्तं वावश्यं नैमित्तिकं प्रयोजयेदित्यवश्यकर्त्तव्या भावना यथाशक्त्यङ्गानि गमयतीति तावतैव फलम। अतो यथाशक्तिप्रयोगेणैवाधिकारः ॥१॥

काम्यप्रयोगेष्वपि कामनावत्पुरुषमत्राधिकारत्वं प्रतीत्य बाधाय यथाशक्तिप्रयोग इति चेत्—**काम्यं सगुणमेव तु।** नैमित्तिकस्यावश्यकर्त्तव्यत्वद्......
[?] कानवगमात् कामनायाश्चानिमित्तत्वात् सर्वप्रयोगशक्तकामिपरत्वेनापि तच्छ्रुत्युपपत्तेः। सर्वाङ्गोपसंहारशक्तस्यैवाधिकारः तिर्यगधिकरणसिद्ध एव पूर्वाधिकरणप्रत्युदाहरणत्वेन प्रपञ्चितः ॥२॥

क्रियाद्रव्ययोरभेदान्नीवारादिद्रव्यभेदे तदात्मिका यागादिक्रियादि भिन्नैवेति प्रतिनिधिनापि विहितयागाननुष्ठानाद् व्यर्थः स इति चेत् — **द्रव्यभेदेऽपि यागादिक्रिया नैव विभिद्यते।**

[अत्र ग्रन्थपातः]

राज्यावेक्षणादिपरार्थक्रियाः आध्वर्यवादिभिः कार्याः। फलिसंस्कारास्त्वन्येन कृता अपि व्यर्था इति न स्वामिनः प्रतिनिधिः ॥७॥

'सप्तदशावराः सत्रमासीरन्नि'त्यत्र बहूनां प्रवृत्तानामेकमरणेन प्रति-

निधिः स्वामिन इति चेत् — **सत्रे तस्याप्यसौ भवेत्**। आरब्धस्य काम्यस्यापि यथाशक्त्यवश्यसमापनीयत्वादानीयमानस्य यजमानशब्दवाच्यस्वामित्वविशिष्टकर्त्तृत्वाभावेऽपि कर्त्तृत्वांशेनाङ्गभूतसंख्याप्राप्तिमन्यः प्रतिनिधेयः ॥८॥

स्वामिस्थानोपनिपातात्सोऽपि स्वामीति चेत् — **न स स्वामी कर्मकृत्वात्**। **[न स्वामी कार्यकारित्वात्]**। कर्मकरोतीति कर्मकृत्। विधित आसङ्कल्पात्कुर्वाण स्वामी। अयं त्वन्यैः संख्यापूरणाय सामाद्युपायापेक्षेण मध्ये आनीत इति न स्वामी ॥९॥

तस्य न फलिसंस्काराः वपनादयः, अफलित्वादिति चेत् — **स्वामिधर्माः तथाप्यसौ**। अन्येषां कर्त्रंशे सप्तदशत्वाबाधाय अफलित्वेऽप्यस्यानुरोधेन ते न [तान्] कुर्यात् ॥१०॥

व्रीह्यपचारे सदृग्गतं यद्वा प्रतिनिधेयं, व्रीहिशास्त्रस्य सदृग्विषयत्वात्। आग्नेयादेश्च द्रव्यसामान्याक्षेपकत्वादिति चेत् — **सदृक् प्रतिनिधातव्यम्**। व्रीहिशब्दस्य जात्यर्थतया तत्परिच्छिन्नावयव्यारम्भयोग्यावय·········

[ एतावत्येवोपलब्धा मातृका ]

●●●

# श्लोकाद्योपान्त्यपादानुक्रमणी



फा०—२१

